


श्रीमदन्नम्भट्टविरचितः

# भेदनिरासः

# BHEDANIRĀSA

OF

ANNAMBHAṬṬA

*General Editor* :

DR. H. P. MALLEDEVARU, M.A., Ph.D.

*Editor* :

VIDWAN N. S. VENKATANATHACHARYA

प्राच्यविद्यासंशोधनालयः, मैसूरु

ORIENTAL RESEARCH INSTITUTE, MYSORE

1989

*Price* : Rs. 12–00

UNIVERSITY OF MYSORE
Oriental Research Institute Series 172

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमाला

# BHEDANIRĀSA

# भेदनिरासः
टिप्पण्यादिसमलङ्कृतः




ORIENTAL RESEARCH INSTITUTE
MYSORE

प्राच्यविद्यासंशोधनालयः
मैसूरु

1989

First Edition 1989
प्रथमं मुद्रणम् १९८९



Published by :
The Oriental Research Institute,
University of Mysore, Mysore.
मैसूरु विश्वविद्यानिलयप्राच्यविद्यासंशोधनालयद्वारा
प्रकाशितम्

Printed by :
S. Chandrashekar,
For Chaaritra Printers, Ramanuja Road,
8th Cross, Mysore—570004

मैसूरु रामानुजवीथीस्थचारित्रमुद्रणालयद्वारा
एस्. चन्द्रशेखरेण मुद्रितम्
1989

UNIVERSITY OF MYSORE
Oriental Research Institute Series 172

# BHEDANIRASA
# OF
# Annambhatta
## WITH FOOT NOTES

General Editor
Vidwan Dr. H. P. Malledevaru M.A. Ph.D.Dip-in Ind.
Director
Oriental Research Institute,
and Professor, Department of
Studies in Sanskrit
Manasagangotri
University of Mysore, Mysore

Critically Edited by
N. S. Venkatanathacharya
Nyaya-Vyakarana-Sahityalankara Vidwan
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE
1989

First Edition 1989
प्रथमं मुद्रणम् १९८९



Published by :
The Oriental Research Institute,
University of Mysore, Mysore.
मैसूरु विश्वविद्यानिलयप्राच्यविद्यासंशोधनालयद्वारा
प्रकाशितम्

Printed by :
S. Chandrashekar,
For Chaaritra Printers, Ramanuja Road,
8th Cross, Mysore—570004

मैसूरु रामानुजवीथीस्थचारित्रमुद्रणालयद्वारा
एस्. चन्द्रशेखरेण मुद्रितम्
१९८९

UNIVERSITY OF MYSORE
Oriental Research Institute Series 172

# BHEDANIRASA
# OF
# Annambhatta

**WITH FOOT NOTES**

General Editor
Vidwan Dr. H. P. Malledevaru M.A. Ph.D.Dip-in Ind.
Director
Oriental Research Institute,
and Professor, Department of
Studies in Sanskrit
Manasagangotri
University of Mysore, Mysore

Critically Edited by
N. S. Venkatanathacharya
Nyaya-Vyakarana-Sahityalankara Vidwan
Senior Research Assistant
Oriental Research Institute, Mysore

ORIENTAL RESEARCH INSTITUTE
MYSORE
1989

मैसूरु विश्वविद्यानिलयः
प्राच्यविद्यासंशोधनालयग्रन्थमालाङ्कः १७२

श्रीमदन्नम्भट्टविरचितः

# भेदनिरासः

(वेदान्तप्रकरणग्रन्थः)

टिप्पण्यादिसमलङ्कृतः

प्रधानसम्पादकः
विद्वान् हेच्. पि. मल्लेदेवरु एम्. ए. पिहेच्. डि
प्राच्यविद्यासंशोधनालयाध्यक्षः
मैसूरु विश्वविद्यानिलय–स्नातकोत्तरसंस्कृताध्ययन-
विभागप्राध्यापकः
मानसगङ्गोत्री
मैसूरु विश्वविद्यानिलयः, मैसूरु

सम्पादकः परिष्कारकश्च :
एन्. एस्. वेङ्कटनाथाचार्यः
न्याय–व्याकरण–साहित्यालङ्कारविद्वान्
सीनियर् रिसर्च् असिस्टेण्ट्
प्राच्यविद्यासंशोधनालयः मैसूरु

प्राच्यविद्यासंशोधनालयः
मैसूरु
1989

# FOREWORD

It is a matter of pleasure to offer the present work 'Bhedanirāsa' to the world of scholars. This is a very important treatise on the concept of 'Difference' from the stand point of ADVAITA school of Śrī Śaṅkaracārya. The concept of 'Bheda' (or Differenco) was a matter of contention between Dvaita and Advaita schools of Philosophy. Men of sharp intellect vied with one another on this question. Annambhaṭṭa has offered his mite to this debate in this treatise.

*Author*

Annambhaṭṭa, author of the present work, was a great scholar of the 17th Century, A.D. He was a stalwart in several branches of learning. He has contributed a lot to the Sanskrit lore.

*Author's life and works ;*

We know very little about the personal life of Annambhaṭṭa. It becomes known from the colophons of some of his works that he was the son of Meligiri Tirumalarya who was an illustrious member of the family of Advaitavidyācārya Rāghava Somayājin. This family belonged to the Kauśika Gotra.

Even though scholars differ from one another on the question of Annambhaṭṭa's date, it is reasonable to believe that he flourished during the Seventeenth Century A,D. for the following reasons :

(1) Annambhaṭṭa wrote a commentary on the Tattvacintāmaṇidīdhitivyākhyā of Raghunāthaśiromaṇi whose date is A. D. 1477–1547.

(2) Annambhaṭṭa refers to Madhusūdana Thakkura (C. 1575 A. D.) in his works.

(3) Annanmbhaṭṭa was a pupil of Śeṣavīreśvara (in Vyākaraṇa), who lived in the seventeenth century A. D.

Annambhaṭṭa's known works are the following :

(1) Tattvacintāmaṇidīdhitivyākhyā (Sudhīmanoharā)
(2) Tattvacintāmayālokavyākhyā (Siddhāñjana)
(3) Tattvavivekadīpanavyākhyā
(4) Tantravārṭikaṭīkā (Subodhini Śudhādhārā) also called Rāṅakojjīvini
(5) Tarkasaṅgraha
(6) Tarkassaṅgrahadīpikā
(7) Tarkabhāṣātattvaprabodhini
(8) Nyāyapariśiṣṭaprakāśa
(9) Pāṇinīyavṛtti (Mitākṣarā)
(10) Brahmasūtravṛtti (Mitākṣarā)
(11) Bhedanirāsa (Advaita)
(12) Rānakabhavanākārikāvivaraṇa
(13) Svaraviveka (Vedalakṣaṇa)
(14) Nyāyasudhāvyākhyā (Mimāmsā)
(15) Bhāṣyapradipodyotanam((Vyākaraṇa)

From the above list, one can assess the contribution of Annambhaṭṭa to Sanskrit learning. The short work 'Tarkasaṅgraha' has made him very popular since it is studied through out the country by the students of Nyāyaśāstra as the basic text.

## *Present Publication*

Sri Sringeri Jagadguru Sri Sri Bhāratitīrtha Mahāswamiji evinced keeñ interest in the publication of this work. His Holiness was kind enough to bless the undersigned to get this valuable work edited by an able scholar and to get it published. The Oriental Research Institute had only one manuscript of this work. His Holiness was kind enough to offer another manuscript of this work to help in editing. This manuscript was really precious because His Holiness had incorporated some corretions

in the margins. The inspiration and guidance given by His Holiness Jagadguruji are the main cause for taking up the cditing of this work.

Sri N. S. Venkatanathacharya, who was working as a Research Assistant (Class I) at the Oriental Research Institute was assigned this work. He has taken pains to edit this work with useful foot notes and informative introduction. His experience and acumen are evident In the present work.

I offer my salutation to his Holiness Jagadguru Srī Srī Bhāratī Tirtha Mahāswamiji whose blessings inspired us in bringing out this work. Vidvan Ṅ. S. Venkatanathacharya deserves thanks for his love of labour in meticulously editing the work. M/s. Charitra Printers, Mysore, have printed this work nicely and I thank them also. The Oriental Research Institute is indebted to our Vice-Chancellor Dr. (Ms,) P. Selvie Das and other authorities of the University of Mysore for their continuous support and encouragement in publishing Sanskrit classics.

I trust that this volume will be received warmly by Sanskrit scholars.

*H. P. Malledevaru*

# अनुक्रमणिका

---



---

**(अन्ते च प्राच्यविद्यासंशोधनालयेऽस्मिन् अद्यावधि प्रकटितानां ग्रन्थानां पट्टिकाऽपि संयोजिता)**

## उपोद्घातः



इदमिदानीं प्रकाश्यते भेदनिरासाख्यं वेदान्तप्रकरणरूपं ग्रन्थरत्नम्। यदिदं वेदान्तसिद्धान्तजीवातुभूतं भेदवादनिरसनात्मकं विषयमधिकृत्य प्रवृत्तं, अत्यन्तगभीरया नव्यन्यायानुसृतगदाधरोपज्ञप्रवृत्तनिरूपणसरण्या परमतखण्डने स्वमतस्थापने च बद्धादरं अतिरमणीयविचारधारापूरितं सैद्धान्तिकविषयसमर्थने समर्थं च सत्, मातृकारूपेणोपलभ्यमानमपि एतावता कालेनाप्यमुद्रितं सद्योमुद्रणार्हं चेति श्रीशृङ्गेरीशारदापीठास्थानमलङ्कृतवतां श्रीस्वामिनां सूचनया विभावितवतां श्रीमतां मैसूरु विश्वविद्यानिलय प्राच्यविद्यासंशोधनालयनिर्देशकानां प्रातःस्मरणीयानां विदुषां डा० एच्. पि. मल्लेदेवरु एम्.ए, पिहेच्. डि. महोदयानां सादरप्रेरणेन समुत्साहितैः अस्माभिः सम्यक् यथामति परिष्कृत्य, आवश्यकटिप्पण्यादिना समलङ्कृत्य च सहृदयानां विदुषां करकमलयोरधुना समर्प्यते इति ससंमोदमावेदयामः

ग्रन्थरत्नस्यास्य प्रणेता च सर्वजनप्रसिद्धः पण्डितोत्तमश्च तत्रभवान् अन्नम्भट्टमहोदयः। यदुपज्ञमिदानीं भारतेऽस्मिन् सर्वत्र–प्राच्यनव्योभयधारासंवलिततर्कविद्यारहस्यसम्पदमधिजिगांसमानां छात्रधीसरणिमारूढा न्यायविद्येति सर्वविदितमेव खलु ![1]

सोऽयं श्रीमान् अन्नम्भट्टः आन्ध्रदेशाभिजनः, आन्ध्रेषु च गरिकपादनाम्नि ग्रामे क्रिस्तशकपञ्चदशशताब्द्यां, समुत्पन्नः इति केचन वदन्ति[2]।

---

[1] तद्विरचित तर्कसङ्ग्रहदीपिकाख्यग्रन्थयोर्द्वारेति यावत्।

[2] श्रीगोडबोले विरचिते 'भरतखण्डा चा ऐतिहासिक कोष' इत्याख्ये महाराष्ट्रीयभाषानिबद्धविश्वकोशे (P. 56)

तदसहमानाः विमर्शकाः श्री महादेवराजारामबोडसमहोदयाः तस्य पञ्चदश-शताब्दीभवत्वे परं विप्रतिपद्यन्ते[3]। यतः अयमन्नम्भट्टः तत्त्वचिन्तामणि-दीधितिव्याख्यातुः श्रीमतो गदाधरभट्टाचार्यात्, एवंसिद्धान्तमुक्तावली-रचयितुः विश्वनाथपञ्चाननाच्च अर्वाचीनः इति, गदाधरभट्टाचार्यस्य कालश्च क्रिस्तशकषोडशशताब्दीति, ततोऽप्यर्वाचीनता विश्वनाथपञ्चाननस्येति च स्थित्या ततोऽप्यर्वाचीनतैवास्यान्नंभट्टस्य भवेदिति एषां विचारसरणिः।

अङ्गीकुर्मस्तावदिममंशम्–अथापि आन्ध्रदेशाभिजनत्वे प्रायशः कमपि बाधकमंशं न पश्यामः। यतः अद्यापि तस्मिन् गरिकपाद्ग्रामप्रान्ते कृष्णानदीतटोपान्तवर्तिनि जनपदे अन्नम्भट्टोपनामकानां ऋग्वेदाध्यायि-ब्राह्मणानां सन्ततिर्दृश्यते इति अनुशुश्रुम।

अयं चान्नम्भट्टः श्रीराघवसोमयाजिनाम्नः कस्यचिद्याजुषस्य प्रसिद्ध-विदुषः कुले समुत्पन्नस्य श्री तिरुमलार्यवर्यस्य आत्मजः आसीत् इति तत्कृतव्याकरणमहाभाष्यव्याख्यानप्रदीपव्याख्यानभूतोद्योतनस्यपुष्पिका-रूपादन्तिमसमाप्तिवाक्यादवगम्यते।[1] तस्यास्य जीवितकालस्तु प्रायः क्रिस्त-शकाष्टादशशताब्द्याः प्रथमः पादो भवेदिति वक्तुं शक्यते इति बहुविध-प्रमाणजालपर्यालोचनेन श्रीमन्तः बोडसमहोदयाः निरूपयन्ति।[3]

---

[1] बाम्बे संस्कृतसीरीस (No. 55) तर्कसङ्ग्रहग्रन्थस्यांग्लानुवादे (P. 53)

[2] तत्र हि ग्रन्थसमापनवाक्यमेवं दृश्यते-यथा-'इति श्रीमहामहोपा-ध्यायाद्वैतविद्याचार्यश्रीराघवसोमयाजिकुलावतंस - श्रीतिरुमलाचार्य वर्यस्य सूनोः अन्नम्भट्टस्य कृतिषु भाष्यप्रदीपोद्योतने–इति"

[2] तर्कसङ्ग्रहांग्लानुवादे- (बाम्बे संस्कृतसीरीस् (No, 55) P.56)

अन्ये केचित्तु–नायमान्ध्रदेशीयः, किन्तु कर्णाटकदेशीयः एव' इति तदनुगुणसाक्ष्यखण्डानादाय निरूपयितुमुत्सहन्ते ।[3]

सोऽयमन्नम्भट्टः काश्यां अप्रतिमवैदुष्यसम्पन्नानां पण्डितवरेण्यानां संनिधौ न्यायव्याकरणवेदान्तादिविद्याः अधीत्य समासादितप्रचण्डपाण्डित्य–स्सन्, गुरुकुलान्निर्गमनावसरे एव विद्वत्कुलेनात्यन्तमादरणीयप्रसिद्ध-प्रभावः आसीत् इति, क्रमेण कथास्वपि–

'काशीगमनमात्रेण नान्नम्भट्टायते द्विजः" इति जनसामान्यगाथा-विषयश्चासीदिति च कथाभिः शुश्रुम ।

अनया चैवंविधप्रसिद्ध्या साकं–ग्रामीणजनैरुदाह्रियमाणा साहितीरसिकजन-कल्पिता काचनान्याऽपि कथा प्रसिद्धा वर्तते यथा–अयमन्नम्भट्टः केवलं शास्त्रपण्डित एव, न तु कविः, यतोऽयं (प्रसिद्धं) तर्कसङ्ग्रहनामानं ग्रन्थं विरच्य ग्रन्थान्ते स्वानामधेयसङ्कलितं एकं समापनश्लोकं पुष्पिकारूपेण निबद्धु कामः 'विदुषान्नम्भट्टेन विदुषान्नम्भट्टेन' इत्येव पुनः पुनः वाचा वदन् ,अस्य छन्दोऽननुगुणतां विभाव्य खिन्नः 'कथं वा मदीयं नाम, मदीयपाण्डित्यसूचकं पदं च अत्रान्तिमश्लोके संयोजयेयम् ?' इत्यालोच्यालोच्य अत्यन्तं खिन्नमनस्कः चिन्तामग्नश्च यदा उपविष्टस्तदीयभार्यया दृष्टः, तदा विद्वत्कुलसमुत्पन्ना सा समागत्य, तदीयां तां दुरवस्थां दृष्ट्वा, तद्धेतुं च पृष्टवती अन्तरेव हसन्ती, तं सम्बोध्य 'कुत एवमल्पे विषये महत्येतादृशी चिन्ता ? 'अन्नंभट्टेन विदुषा' इति तत्रत्यपदपौर्वापर्यकरणेन छन्दस्समीक्रियताम्,साध्यतामभिलाषा इत्युक्त्वा तदीयां समस्यां क्षणमात्रेन पर्यहरत्– इति। इदं च केवलं कल्पितमेव। शास्त्रपाण्डित्य-सम्पादनादपि कवितासम्पादनं दुर्लभम्. इति वा, 'शास्त्रपाण्डित्यं कविता च

---

[3] श्रीमहामहोपाध्यायमीमाचार्यझलकीकर इत्येतैः विरचिते न्याय-कोशाभिधे ग्रन्थे(P. 31)

कथमपि कदाऽपि न समानाधिकरणा' इति वा स्वाशयं प्रकटयितुकामैः आधुनिकैः साहितीरसिकैः प्रस्थापितेयं कथेत्येव वयं मन्यामहे ।

अस्य चान्नंभट्टस्य न्यायशास्त्रे गुरुः गिरिधरोपाध्यायनामा इति ज्ञायते । यतः वाधूलकुलतिलकश्रीशैलदेशिकतनयस्य श्रीवेङ्कटार्यगुरुवर्यस्य कृतिषु अन्यतमायां तर्कसङ्ग्रहदीपिकाव्याख्यायां तत्त्वार्थदीपिकाभिधानायां—मङ्गल-श्लोकव्याख्यानावसरे "गिरिं गुरुं इतिपाठे—गिरिधरोपाध्यायनामकं गुरु-मित्यर्थः" इति व्याख्यातम् ।

अनेन च महापण्डितेन अन्नम्भट्टेन अत्राधोनिर्दिष्टाः दशग्रन्थाः विरचिताः इति प्रसिद्धिः । यथा—

(१) तर्कसङ्ग्रहः–(अयं च प्रशस्तपादकृतवैशेषिकसूत्रभाष्यस्थग्रन्थांशानेव संक्षेपतः सङ्कलय्य बालार्थं रचितः न्यायग्रन्थः)।

(२) तर्कसङ्ग्रहदीपिका–(इयं च स्वरचिततर्कसङ्ग्रहग्रन्थस्यैव व्याख्या-रूपा, तत्त्वचिन्तामणिग्रन्थात्, रघुनाथतार्किकशिरोमणिकृतात् दीधितिग्रन्थाच्च सारमुद्धृत्य रचिता, न्यायशास्त्रीयनव्यप्राच्योभयधारा-सङ्गमनात्मिका ।)

(३) मिताक्षरा। (पाणिनीयसूत्रवृत्तिः)

(४) मिताक्षरा। (व्यासरचितब्रह्मसूत्रवृत्तिः)

(५) तत्त्वबोधिनीटीका। (भट्टोजीदीक्षितकृतसिद्धान्तकौमुदीव्याख्यान-व्याख्यारूपा)

(६) न्यायपरिशिष्टप्रकाशः। (न्यायभाष्यव्याख्या)

(७) सुबोधिनीसुधासारः।

(८) राणकोज्जीविनी ।

(९) भाष्यप्रदीपोद्योतनम् ।

(१०) भेदनिरासः (अयमेवाद्वैतवेदान्तप्रकरणग्रन्थः) इति ।

अस्य चान्नंभट्टस्य एको ज्यायान् भ्राता आसीदिति, तस्य च श्री रामकृष्णभट्टः इति नामधेयमासीदिति, तेन च भट्टोजीदिक्षितविरचित-सिद्धान्तकौमुद्याः सिद्धान्तरत्ननाम्नी काचन व्याख्या रचिता इति च कर्णाकर्णिकया श्रूयते इति—वङ्गीयसत्कारिशर्मा स्वसम्पादितनवव्याख्या-सहिततर्कसङ्ग्रहग्रन्थभूमिकायां लिखति ।

अस्तु–अथैतदन्नम्भट्टविरचितमिमं ग्रन्थं प्रति किञ्चित् प्रस्तुमः-ग्रन्थोऽयं प्रायशः न्यायसंस्कारसम्पन्नानां अधीतिनां स्पष्टार्थ एव भवेदिति संभाव्य, एतद्ग्रन्थरचनाप्रवर्तकं श्रीमद्भगवत्पादशङ्कराचार्यगुरुवरोपज्ञप्रवृत्ताद्वैतसिद्धान्त–हृदयभूमिकागतद्वैतनिरसनप्रक्रियामूलभूतं निगमशिरोऽर्थमधिकृत्य द्वित्राः वाचः प्रवर्तयितुमुत्सुकाः स्मः ।

कस्मिंश्चित् सुवर्णयुगे एवमासीदिति श्रूयते, यथा —

'मार्गे मार्गे निर्मलं ब्रह्मवृन्दं
वृन्दे वृन्दे तत्त्वचिन्तानुवादः ।
वादे वादे जायते तत्त्वबोधः
बोधे बोधे भासते चन्द्रचूडः ॥'

इति । स एव च कालः 'तत्त्वबुभुत्सोः कथा वादः, विजिगीषु-कथा जल्पः' इति वादजल्पशब्दयोः विविच्य विवरणोक्तिकालोऽपीति, गच्छति च काले तादृशलक्षणलक्षितस्य वादस्य केवलं विधवाप्रवर्त्यमान-

पटोलिकापुराणप्रवचनसादृश्यं, जल्पस्यैव वादलक्षणलक्षितत्वं च पाण्डित्यातिरेकमहिम्ना सञ्जातमिति च सर्वेषां सुविदितमेव ।

अस्यामवस्थायां तादृशेनैव वादमार्गेण सत्यार्थविरुद्धार्थानां खण्डनाय तत्त्वार्थप्रकाशनाय च प्रवृत्तेषु ग्रन्थेषु अन्यतमोऽयं ग्रन्थः प्रमाणेनाल्पशरीरोऽपि अर्थगौरवेण सिद्धिब्रह्मानन्दीयादिगुरुतरग्रन्थानां समतुलनामेवार्हतीति एतद्ग्रन्थाध्येतॄणां न परोक्षं भवेदिति च मन्यामहे ।

अत्र च एकत्ववादः, अनेकत्ववादः, द्वैतवादः, अद्वैतवादः, द्वैताद्वैतवादः, विशिष्टाद्वैतवादः, भेदवादः, अभेदवादः, भेदसहिष्णवभेदवादः, भेदाभेदवादः इत्यादयः असङ्ख्याताः वादाः विभिन्नविभिन्ननिरूपणप्रस्थानाः, स्वस्वसरणिमपरित्यजन्तः उपर्युपरिवर्धमानाः दृश्यन्त एव । तेषां सर्वेषामपि वादानां कीटनाशनं नाशनेन यत्किञ्चिदेकसिद्धान्तमात्रोज्जीवनं कर्तुं प्रायशो ब्रह्माऽपि न प्रभवेदेव ।

परंतु एतावन्मात्रं वक्तुं प्रकृते वयं प्रभवामः—यत्—अभिज्ञजनसामान्येन प्रार्थनीयमाशंसनीयं च यदभयभावपूरितं स्वस्थं प्रशान्तं च जीवनम्, तस्य वस्तुतः कण्टकायितं इदं भेददर्शनमेवेति ।

"यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते ।
अथ तस्य भयं भवति ।"
"द्वितीयाद्वै भयं भवति"
"अथ यत्सर्वमात्मैवाभून् तत्केन कं पश्येत् केन कं विजानीयात् ।"
इत्यादयश्च श्रुतयः अस्मिन्नर्थे जाग्रत्येव ।
एतदेव हि यौगिकेन रूपेण प्रार्थ्यते अभिज्ञैरपि, यथा—
" अङ्गुष्ठतर्जनीयोगमुद्राव्याजेन देहिनाम् ।
श्रुत्यर्थं ब्रह्मजीवैक्यं दर्शयन्नोऽवतात् शिवः ॥" इति

सर्वत्र भेददर्शनसामान्यत्यागस्यैव हि उपलक्षणमिदम् ।

तादृशप्रकृतिसहजसिद्धविभ्रमनिमित्तभयजालहेतोः भेदभावस्योपशमनेन, "एतदमृतमभयम्"

इत्युक्ते गीतोक्तसमत्वापरपर्याये अभेदे यदि मनोऽवस्थापयितुं लौकिकः परीक्षको वा प्रयतेत, तदाऽयं एतदुक्तरीत्या रीत्यन्तरेण वा मनसि भेदनिरसनं कर्तुं अवश्यं प्रयतेतैवेति । तादृशे च प्रयत्ने बुद्धावुन्मीलितुं शक्याः विविधाः प्रकृतिसहजाः विघ्नकारिण्यः आशङ्काः यथाशक्ति परिहृत्य मनसि स्वस्थतां सम्पादयितुं कालानुगुण्येन एतादृशाः तर्कमार्गपरिपूरिताः ग्रन्था अप्यावश्यका एवेति च वयं भावयामः इति ॥

यद्यपीयं–तत्त्वस्पर्शिनी अभेदभावना भेदसामान्यनिरसना वा सत्यात्मिकाऽपि नैन्द्रियिकी, न वा सर्वसाधारणजाग्रदवस्थानुबन्धिनी; किन्तु केवलं परमहंसजनपुण्यराशिसम्प्राप्य – श्रीपरमगुरुचरणारविन्दपरमानुग्रह विशेषसहकृतसाधनविशेषलभ्य – जीवजातसहजधर्मरूपतुरीयावस्थानुबन्धिन्येवेति, मुण्डकोपनिषद्रहस्यज्ञानां श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशङ्करभगवत्पादानुगृहीतपरब्रह्मानुभवपरिवाहरूपयोगतारावलीरहस्यज्ञानां च नैव तिरोहितं भवेत् । अथापि निशितबुद्धिग्राह्यतर्कविषयाऽपि यथार्थविषय–संसाधनेन, अस्मिन् विषये सत्यार्थसाधनप्रवृत्तेः सत्तर्कपरिकर्मितस्वबुद्धिसहकारोऽपि सम्पाद्येतेति सदाशयेनैव एवंविधकठिनतमकर्कशतर्कसरण्या अयं विषयः सयुक्ति निरूपितः इत्येव अभिज्ञैः बहुमाननीयोऽयं प्रकरणग्रन्थः इति विभावनीयमिति वयं मन्महे ।

तत्रापि–वस्तुतः भेदवादिन एवेमे सर्वे नैयायिकाः । अयं ग्रन्थकर्ताऽपि एवं सर्वजनप्रसिद्धतादृशवीरनैयायिक एव सन्नपि, वेदान्तशास्त्रमेव परमं परमार्थशास्त्रं निश्चित्य, पुष्पफलोद्यानरक्षणाय अत्युग्रकण्टकावरणरक्षणवत्,

निगमागमशिरःप्रतिपाद्यतत्त्वार्थरक्षणायैव अस्मिन् न्यायशास्त्रेऽपि एतादृशं परमं पाण्डित्यं आत्मनि सम्पादयामासेति, तदेव च ग्रन्थरूपेण प्रदर्शयामासेति च अनेन ग्रन्थेनैव स्पष्टं ज्ञायते।

प्रकृते च अभिमतप्रमाणैरेव निर्दोषैः वस्तुतत्त्वावधारणे क्रियमाणे, केनापि प्रमाणेन सिद्धान्तितव्यविषयबाधो न शङ्कनीयः इति, प्रकृतग्रन्थे चतुर्भिः प्रकरणैः वेदान्तिभिरङ्गीकृतप्रमाणषट्क (प्रमाणाष्टक) विरोधाशङ्काः अपि उत्थाप्य प्रतिवादिप्रयुक्तयैव सरण्या परिहृताः।

अत्र च प्रथमे प्रकरणे भेदनिरासं प्रति प्रत्यक्षप्रमाणविरोधपरिहारः, द्वितीये अनुमानप्रमाणविरोधपरिहारः, तृतीये शब्दप्रमाण (श्रुति) विरोधपरिहारः, चतुर्थे च उपमानार्थापत्त्यनुपलब्धिसम्भवैतिह्यात्मकप्रमाणपञ्चक विरोधपरिहारश्चेति सर्वोऽपि हृदयङ्गमतया वर्णितः।

सारतः वेदान्तार्थजिज्ञासुभिः सर्वैरपि आदरणीयोऽयं ग्रन्थ इति हार्दमभिदध्महे।

प्रकृतैतद्ग्रन्थप्रकाशने समुपलब्धा प्रथमा मातृका अस्मदीयप्राच्यविद्यासंशोधनालयस्थमातृकाभाण्डागारे एव स्थिता। (No. P. 1835) सा च नन्दिनागरीलिपिः प्रायशः शुद्धाऽपि तत्र तत्र त्रुटिता, क्वचित्क्वचित्पुनरुक्तवर्णजाला, क्वचिन् अलेखेनैव परित्यक्तग्रन्थभागा च दृश्यते अस्मिन् संनिवेशे श्रीशृङ्गेरीमठस्थमातृकायाः प्रतिकृतेः प्रदानेन परिशोधने साहाय्यं कृतवत्सु श्रीमठाधिकारिषु वयं कृतज्ञतां सूचयामः। एषैवात्र यथाकथंचित् परिशुद्धग्रन्थस्वरूपसम्पादने सहकारिणी द्वितीया मातृका।

एषा च मातृका श्रीशृङ्गेरीशारदापीठविभूषितानां श्रीसंनिधानवरेण्यानां श्री श्री भारतीतीर्थमहास्वामिनां संनिधौआसीत्। एनां च अस्मदीयसंस्थानिर्देशकेषु समर्प्य 'अस्य ग्रन्थस्य भवद्भिः अवश्यं सम्पादनं प्रकटनं

च अद्यैव करणीय' मिति श्रीचरणैः प्रकटितां स्वमनोभिलाषां पूरयितुं अस्म न्निर्देशकैः आज्ञप्ताः वयं सद्य एव संशोधनकार्ये प्रवृत्ताः । ततश्चाल्पेनैव कालेन तत्र तत्र विषयस्थलेषु टिप्पण्यादिप्रदानेन शुद्धपाठसङ्कलनेन च मुद्रणाय सज्जीकृतश्चायं ग्रन्थः । तमिममेवं साधितं ग्रन्थं समवलोक्य सन्तुष्टान्त-रङ्गैः श्रीगुरुचरणैः परमाशीःप्रदानपूर्वकं प्रहितं सम्मानमपि सपादपातप्रणति स्वीकृत्य, एतत्पवित्रतमकर्मयोगेन ज्ञानयज्ञात्मना पुण्यलब्धेन परमगुरुपरमा-शीर्वादपात्रभूतान् अस्मान् वयं धन्यानपि च मन्यामहि । अस्यां च मातृकायां प्रतिलिपीकृतायां तत्र तत्रोपदशस्थलेषु श्रीश्रीचरणैरेव युक्तः पाठः सूचितः, परिमितसमैर्वर्णैः पञ्चषस्थलेषु टिप्पण्यपि दत्ता चासीत् । संशोधनकार्येऽस्मिन् तत्सहकारोऽप्यस्माभिरादृतः ।

तत्र प्रथमा अस्मदीयप्राच्यविद्यालयस्था मातृका 'क' संज्ञया, द्वितीया शृङ्गेरीतः प्रहिता 'ख' संज्ञया चात्र निर्दिष्टा ।

विषयानुगुणतया दृष्टं पाठं ग्रन्थे संयोज्य मातृकास्थं अन्यं पाठान्तरत्वेन अधः निरदिशाम । तत्र तत्र सिद्धान्तार्थविवरणेन ग्रन्थकर्तृकृतोपपादनौ-चित्यं प्रादर्शयाम । अन्ते च विषयाणां शीघ्रग्रहिकानिमित्ते अनुबन्धभागं समयोजयाम ।

एवं सर्वादरणीयैतन्महद्ग्रन्थसम्पादने परिष्करणे च सर्वविधसहकार-सम्पत्तिं प्रोत्साहं च प्रदाय, तत्र तत्र दिग्दर्शनं निर्देशनं च विधाय हस्ताव-लम्बं दत्तवतां एतत्प्राच्यविद्यासंशोधनालयनिर्देशकानां मैसूरु विश्वविद्यानिलय स्नातकोत्तरसंस्कृताध्ययनसंशोधनप्राध्यापकानां विदुषां अत्रभवतां श्रीमतां डा० हेच्. पि. मल्लेदेवरु एम्. ए, पिहेच्. डि महोदयानां संनिधौ हृत्पूर्विकाः इमाः अनन्ताः कृतज्ञताः धन्यवादां श्च निवेदयामः ।

एवं सुसम्पन्नेऽप्यस्मिन् महति कार्ये मानवधीसुलभाः मुद्रणतन्त्रानु-

बन्धिनश्च अनेके लोपदोषादयः क्वचित्क्वचित् सम्भाव्येरन्नेवेति सत्यं वयं मन्यामहे । अत एव सहृदयानां सविधे–

" न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते ॥
विद्यमानश्च दोषश्चेत् किं वक्तव्यं भवेदिह ॥" इत्यभिज्ञवचनं स्मारयन्तो वयं, दृष्टानपि कांश्चन दोषान् संशोधनेनापबाध्य कृपां कुर्युः–इति–सविनयं प्रार्थयामश्च ।

अथ च भूयोभूय इदमप्याशास्महे—

जयतु जगतां मूलं सत्यं सनातनमञ्जसा
जयतु सरसा वाणी दिव्या तदीयमनोऽनुगा ।
जयतु विदुषां वर्गः तस्याः सदातन आश्रयः
जयतु च निधिः तेषां पूर्णा चिरन्तनभारती ॥ इति ॥

सीनीयर् रिसर्च् असिस्टेण्ट्
प्राच्यविद्यासंशोधनालयः
मैसूरुविश्वविद्यानिलयः
मैसूरु

एवं सप्रश्रयमावेदयिता
सहृदयविद्वज्जनवशंवदः
एन्. एस्. वेङ्कटनाथाचार्यः

# भेदनिरासस्य
## विषयसूचनी

—०—

इति शब्दविरोधपरिहारः



इति भेदनिरासविषयसूचनी समाप्ता

=×=

॥ श्रीः ॥

श्रीकृष्णाय परब्रह्मणे नमः

श्रीमदन्नंभट्टविरचितः

# भेदनिरासः

(वेदान्तप्रकरणग्रन्थः)

— ० —

## १. मङ्गलाचरणम्

यस्याः प्रसादलेशेन मूढोऽपि[1] विबुधायते ।
कमलासनकान्तां[2] तां वाग्विभूत्यै[3] नमाम्यहम् ॥

## २. ग्रन्थप्रतिपाद्यविषयः

तत्रतावत्— "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" इत्यादिश्रुतिप्रतिपन्नं[4] अद्वैतं भेदग्राहिप्रत्यक्षादिविरोधात्[5] अनुपपन्नमिति मन्यमानाः केचन[6] अभेदश्रुतीनां अन्यथा अर्थं[7] कल्पयन्ति । तद्दर्शिनां[8] वैदिकानामपि[9] अन्यथाप्रतिपत्तिर्माभूदिति तद्विरोधः निरस्यते ॥

---

॥ भेदनिराललघुटिप्पणी ॥

[1] मूकोऽपि (क) [2] सरस्वतीम्। [3] प्रतिपाद्यार्थानुगुणशब्दसम्पत्तिसिद्ध्यर्थम् ।
[4] इतिश्रुतिपन्नं (ख) [5] प्रत्यक्षविरोधात् (क) [6] भेदोज्जीवनकारादयः द्वैतिनः, न तु नैयायिकाः । अग्रे न्यायामृतस्य मध्वमतस्य च स्पष्टं उत्कीर्तनात् ।
[7] सादृश्यादिमूलकतया भेदपरत्वम् । अन्यार्थं (क) [8] तद्दर्शितानां (क)
[9] वैदिकानां (ख)

## ३. अभेदापरपर्यायस्याद्वैतस्य प्रत्यक्षविरुद्धत्वनिरासः

(तत्र—भेदस्वरूपे विकल्पः)

तत्र 'इदमस्माद्भिन्नं' इति प्रतीयमानो[1] भेदः किं धर्मिस्वरूपम् ?[2] उत तद्धर्मः ?[3] इति विवेचनीयम् ।[4]

## ४. भेदस्य धर्मिस्वरूपात्मकत्वनिरासः

तत्र[5]—न तावदाद्यः[6] । 'इदमस्मात् भिन्नम्' 'घटः पटो न भवति' इत्यादौ प्रकारतया भासमानस्य धर्मिस्वरूपत्वानुपपत्तेः[7]। 'अयं घटः' 'पटात् भिन्नः घटः' इति प्रतीत्योः अविशेषप्रसङ्गाच्च । [8]किञ्च—विषयवैचित्र्यव्यतिरेकेण प्रतीतिवैचित्र्यस्य वक्तुं अशक्यत्वाच्च[9] ॥

## ५. कारणत्वादेरपि स्वरूपात्मकत्वाशङ्का

ननु [10]कारणत्वादिकं स्वरूपमेव अङ्गीकर्तव्यम् । अन्यथा[11] अनन्यथासिद्धेत्यादेः योग्यायोग्यघटितत्वेन अप्रत्यक्षत्वप्रसङ्गात्[12] ।

---

[1] प्रतीयमानः—भिन्नपदप्रवृत्तिनिमित्ततया भासमानः । [2] भेदः धर्मिस्वरूपो वा स्यात् (ख) [3] धर्मो वा (क) [4] इति विवेचनीयमिति नास्ति (ख) एतद्द्वितीयपक्षदूषणमपि उत्तरत्र क्रियते । [5] तत्र इति नास्ति (ख) [6] आद्यः—धर्मिस्वरूपमात्रं भेदः इति पक्षः । क्वचित् तथैव पाठः (ख) [7] यावद्द्रव्यभाविगुणानां अस्मन्मते स्वरूपात्मकत्वेऽपि विशेषबलात् प्रकारतया भानाङ्गीकारात्, नेदं दूषणमस्माकमिति चेत्—दूषणान्तरमाह—अयं घट इत्यादिना । [8] नन्वत्रेष्टापत्तिरेव । निरूपकभेदादेव प्रतीतिभेदस्य सर्वैरप्यङ्गीकारात् इति चेत् तत्राह—विषयेति । [9] 'च' इति नास्ति (ख) [10] कारणत्वादिकमित्यादिपदेन कर्मत्वादेरपि ग्रहणम् । [11] 'अन्यथा' इति नास्ति (ख) [12] कारणत्वस्य अप्रत्यक्षत्वप्रसङ्गादित्यर्थः ।

क्वचिदपि प्रत्यक्षत्वानङ्गीकारे[1] अनुमानस्यापि अप्रवृत्तेः ।[2]

## ६. तदुपपत्तिः

[3] एवं च–एक एव दण्डः कदाचित् दण्डत्वेन भासते 'दण्डः' इति । कदाचित् अन्वयादिसाचिव्ये सति 'दण्डो घट-कारणम्' इति । तत्र 'दण्डः' इति प्रतीतेः न प्रतियोगिधीसापेक्षत्वम्, अन्वयाद्यपेक्षत्वं वा । 'दण्डो घटकारणम्' इति प्रतीतिस्तु उभयापेक्षैव[4] । दृष्टानुसारित्वात् कल्पनायाः । विषयभेदाभावेऽपि प्रतीतिवैचित्र्यं अङ्गीकृतमेव खलु[5] ।

## ७. तदुपोद्बलनेन भेदस्य धर्मिस्वरूपत्वे बाधकाभावशङ्का

एवं [6]प्रतियोग्यनुयोगि – विशेषणविशेष्य–आधाराधेय– अवच्छेद्यावच्छेदकभावादयोऽपि धर्मिस्वरूपाः एव विलक्षणप्रतीतिनियामकाः [7]इत्यप्यङ्गीकृतम् । तथैव[8]—अत्रापि भेदस्य धर्मिस्वरूपत्वेऽपि विलक्षणप्रतीतिनियामकत्वं सप्रतियोगिकत्वं च अविरुद्धमिति चेत् —

---

[1] प्रत्याक्षानङ्गीकारे (ख) [2] वह्निमान् धूमादित्यादौ महानसादौ प्रत्यक्षस्यैव वह्नेः पर्वतादौ अनुमानदर्शनात् । तस्याप्यप्रवृत्तेः इत्यर्थः । [3] ननु तर्हि कथं 'दण्डः' 'घटकारणं दण्डः' इतिप्रतीत्योः वैलक्षण्यम् ? इति चेत् तत्राह—एवमित्यादि । [4] यापेक्षम् (क) [5] अङ्गीकृतम् (क) वैचित्र्यं वाऽङ्गीकृतम् (ख) [6] यद्यपि नवीनैः प्रतियोगित्वादिकं अतिरिक्तमित्येवाङ्गीकृतम् । अथापि प्राचीनैः बह्वीरनुपपत्तीरालोच्य तेषां स्वरूपात्मकत्वमेवाङ्गीकृतम् । यदि प्रतियोगित्वमतिरिक्तं तदा प्रतियोगिनः प्रतियोगित्वस्य च भेदात्, प्रतियोगित्वप्रतियोगिकभेदः प्रतियोगिनि अङ्गीकर्तव्यः । अंगीकारे च प्रतियोगित्वतादृशभेदप्रतियोगिप्रतियोगित्वनिष्ठप्रतियोगित्वस्यातिरिक्तत्वादनवस्था दुर्वारा । एवमाधारत्वादावपि द्रष्टव्यम् । [7] इत्यङ्गी (ख) [8] तथा (ख)

## ८. कारणत्वादीनां धर्मिस्वरूपत्वे सन्देहानुपपत्तिरूपो दोषः

अत्रोच्यते — कारणत्वादयोऽपि विचारणीया एव ।[1] तेषामपि स्वरूपरूपत्वे[2] कथं विलक्षणप्रतीतिनियामकत्वम् ? न ह्येकमेव वस्तु सप्रतियोगिकं निष्प्रतियोगिकं च संभवति, विरोधात् । एवं सति[3] घटप्रतीतौ कारणत्वादिसन्देहश्च[4] न स्यात्, तत्र[5] अज्ञातांशलेशस्याप्यभावात्[6] ।

## ९. प्रकारभेदेन सन्देहानुपपत्तिदोषाभावशङ्का

न च समानप्रकारकनिश्चयस्य समानप्रकारकसंशयविरोधितया, 'घटः' इति निश्चयात् 'घटो न वा' इति सन्देहो[7] माभून्; 'घटः कारणं न वा' इति कारणत्वप्रकारकसंशये[8] किं बाधकम् ? भिन्नप्रकारकत्वात्—इति वाच्यम् ।

## १०. तद्दूषणम्

घटत्वस्येव कारणत्वस्य घटधर्मत्वानङ्गीकारात् ।[9] घटत्वस्य घटापेक्षया भिन्नत्वात्, धर्मिस्वरूपज्ञाने दोषवशात् घटत्वाज्ञाने 'घटो न वा' इति संशयः संभवेत्[10], कारणत्वं तु घटस्वरूपमेवेति, कथं वा[11] घटज्ञाने सति कारणत्वसंशयः सम्भवति ?[12]

---

[1] एवेतिनास्ति (ख) [2] स्वरूपत्वे (क) [3] एवं सतीति नास्ति (ख) [4] सन्देहः (ख) [5] तत्रेति नास्ति (ख) [6] लेशाभावात् (ख) देवदत्तस्य स्वरूपतः वस्तुत्वेन निष्प्रतियोगिकतया भानेऽपि 'देवदत्तः यज्ञदत्तपिता' इत्यादौ सप्रतियोगिकतया भानात्, पूर्वोक्तं न युक्तमित्याशङ्कायामुक्तं घटप्रतीतावित्यादि । [7] घटादिसन्देहो (ख) [8] इति संशये (क) [9] धर्मस्यानङ्गीकारात् (ख) [10] सम्भवति (ख) [11] वा इति नास्ति (ख) [12] सम्भवतीति नास्ति (ख) ।

## ११. कारणत्वस्य प्रकारत्वाभावेन तद्दोषताद्वस्थ्याशङ्का

न च कारणत्वस्य घटस्वरूपत्वेऽपि 'घटः' इति ज्ञाने घटस्य विशेष्यत्वेन तत्स्वरूपरूपस्यापि[1] कारणत्वस्य अप्रकारत्वात्, न कारणत्वप्रकारकसंशयदुर्भिक्षमिति वाच्यम् ।

## १२. तद्दूषणम्

'घटे घटत्वम्' इति ज्ञाने सति[2] कारणत्वसंशयो न स्यात् । उक्तज्ञाने घटस्य प्रकारतया तत्स्वरूपस्य कारणत्वस्यापि प्रकारत्वात् ।

## १३. कारणत्वेन रूपेण प्रकारत्वाभावोक्तेरप्ययुक्तत्वम्

न च घटस्य घटत्वेन रूपेण प्रकारत्वेऽपि, कारणत्वेन रूपेण न प्रकारत्वमिति वाच्यम् । घटस्वरूपातिरिक्तकारणत्वस्य अनङ्गीकारात् ।

## १४. कारणत्वादेर्धर्मिस्वरूत्वेऽपि प्रतीतिविशेषहेतुसामग्रीभेदाङ्गीकारेणादोषत्वम्

ननु कारणत्वादेः धर्मिस्वरूपा[3]नतिरिक्तत्वेऽपि तत्तत्प्रतीतौ [4]अन्वयव्यतिरेकसिद्धसामग्रीभेदः अवश्यं वाच्यः ।[5] घटमात्र-

---

[1] तत्स्वरूपस्यापि (क) [2] अत्र 'ज्ञाने सति' इत्यस्य 'तादृश शब्दप्रयोगजन्ये शाब्दज्ञाने इत्येवार्थः । [3] स्वरूपत्वा (क) [4] तत्प्रतीतान्वय (क)
[5] अयमाशयः कारणत्वं हि अभाववत् नियतसापेक्षम् । अभावस्यातिरिक्तत्वे, अनतिरिक्तत्वे वा, न हि भूदर्शनकाले सर्वत्र घटाभावप्रतीतिर्जायते; किन्तु तत्तत्प्रतियोगिस्मरणवेलायामेव । एवमेव दण्डे विद्यमानेषु बहुविधकारणत्वेषु तत्तत्प्रतियोगिस्मरणवेलायामेव तत्तत्कारणत्वबुद्धिरुदेति । अतः कारणत्वस्य स्वरूपत्वेऽपि न सर्वदा तत्प्रतीतिसम्भवः इति सामग्रीभेदः सर्वैरप्यभ्युपगन्तव्य एवेति भावः ।

प्रत्यायकत्वेन कारणत्वाद्यप्रतीतेः। एवं च विषयभेदाभावेऽपि सामग्रीभेदादेव प्रतीतिभेदो भविष्यति। अन्वय-व्यतिरेकादि-सहकृतप्रत्यक्षे सति [1]कारणताबुद्धिः, प्रतियोगिज्ञानादिसहकृत-प्रत्यक्षे सति [2]भेदबुद्धिरिति किमनुपपन्नम्?

## १५. निगमनम्

एवं च[3] विलक्षणप्रतीतिसिद्धौ तद्विषयत्वेन अस्यापि कारणत्वाद्यनेक-विलक्षणव्यवहारविषयत्वमपि[4] सिद्धम्। इति चेत् —

## १६. विषयवैलक्षण्यस्य अत्यन्तावश्यकत्वोपपादनेन तद्दूषणम्

मैवम्।[5] विषयविशेषाभावेऽपि प्रतीतिवैशेष्यांगीकारे घटादेरप्य-पलापापत्तेः। 'अयं घटः' इति प्रत्यक्षमेव हि घटे प्रमाणम्। तत्र घटज्ञानेनैव सकलघटव्यवहारोपपत्तौ घटांगीकारवैयर्थ्यात्।

## १७. अन्यथा विषयमात्रापलापापत्तिदृढीकरणम्

न च घटानंगीकारे कथं जलाहरणाद्यर्थक्रिया? इति वाच्यम्। जलाहरणाद्यर्थक्रियायामपि प्रमाणमन्विष्यमाणं जलाहरणज्ञान-मेवेति हि[6] वाच्यम् तच्च विषयव्यतिरेकेणाप्युपपन्नमिति विज्ञान-वादप्रसङ्गः।

## १८. विषयवैलक्षण्याभावेऽपि विषयमात्रापलापासम्भवाशङ्का

ननु विषयमात्रापलापस्तावन्न शक्यः।[7] घटानंगीकारे घटसंनि-कर्षादेः घटज्ञानसामग्र्याः अभावेन सामग्रीविशेषस्याप्यभावात्।

---

[1] कारणमिति (ख) [2] भेदप्रतीति (क) [3] एवं (क) [4] विषयत्वं (क) [5] नैवम् (क) [6] ज्ञानमेव (क) [7] अन्यथा हि भवतोऽपि विज्ञानवाद-प्रवेशापत्तिरिति भावः।

क्रमानुरोधेन घटसंनिकर्षस्याहेतुत्वेऽपि, विशिष्टज्ञानमात्रे विशेष्यसंनिकर्षस्य[1] अपेक्षणीयत्वात् । विज्ञानवादे विशेष्यस्याप्यभावेन तदसम्भवात् । अतः विषयः कश्चिदङ्गीकर्तव्यः[2] । तत्र घटादौ धर्मिणि अवश्याङ्गीकार्ये कारणत्वादयो धर्माः तत्स्वरूपा एवाङ्गीक्रियन्ते, नातिरिक्ताः[3], गौरवात्, इति चेत् —

## १९. तन्निराकरणम्

—न, एवं सति रूपादेरपि धर्मिस्वरूपत्वापत्तेः । 'नीलो घटः' इति प्रतीतेरपि घटमात्रविषयकत्वापत्तेश्च[4] ।

## २०. कारणत्वस्य नैल्यादिभ्योऽपि विशेषस्यावश्यकता

न च घटमात्रस्य नीलप्रतीतिविषयत्वे, शुक्लघटस्यापि तत्प्रतीतिविषयत्वापत्तिरिति[5] वाच्यम् । घटविशेषस्यैव तत्प्रतीतिविषयत्वोपपत्तेः । धर्मिस्वरूपस्यापि कारणत्वे[6] सर्वस्यापि[7] तथात्वापत्तिः[8], इत्यपि सुवचत्वात् ।

## २१. प्रकारान्तरेणापि तयोर्भेदसिद्धिनिराकरणम्

ननु रूपघटयोरैक्ये, त्वगिन्द्रियेण घटवत् रूपमपि गृह्येत, रूपवत् घटो वा न गृह्येत—इति तयोः भेदसिद्धिः—इति चेत्—न ।

---

[1] संनिकर्षस्यापि (क) [2] विषयः कश्चिदङ्गीकरणीयः (ख) [3] न त्वतिरिक्ताः (क) [4] विषयकत्वोपपत्तेः (क) [5] नीलादिप्रतीतिविषयत्वापत्तिरित्यर्थः । [6] कारणत्वे–कारणात्मकत्वे । [7] सर्वस्यापि–कारणत्वानिरिक्त धर्मिवृत्तिधर्मान्तरस्यापि । [8] तथात्वापत्तेः (ख) धर्मिस्वरूपत्वापत्तेरित्यर्थः । एवं सति धर्मधर्मिभावस्यैव विलोपः आपद्येत । किञ्च–सर्वस्मादपि सर्वकार्यापत्तिः, एतदर्थं च धर्मिविशेषस्य कारणविशेषरूपत्वाङ्गीकारे, तस्य प्रकृतेऽपि तुल्यत्वमिति भावः ।

नीलादिस्वरूपघटज्ञाने चक्षुरादिकारणविशेषापेक्षोपपत्तेः ।[1] अन्यथा कारणत्वग्राहकसामग्र्यैव सकलप्रतियोगित्वानुयोगित्वादिस्वरूपग्रह[2]प्रसङ्गः । सर्वस्यापि धर्मिस्वरूपत्वाविशेषात् । तदग्रहे कारणत्वस्यापि अग्रहप्रसङ्गः, अविशेषात् ।

यदि च—धर्मिस्वरूपत्वेऽपि[3] तत्तत्स्वरूपग्रहे अन्वयव्यतिरेकसिद्धकारणभेदस्वीकारः, तदा नीलादावपि तुल्यम् ।[4] नीलादिस्वरूपविशेषग्रहे चक्षुरादीन्द्रियापेक्षेति ॥

## २२. एतन्न्यायेन एकत्वादीनामपि धर्मिरूपत्वव्यवस्थाः

एतेन एकत्व-परिमाण—गुरुत्व—द्रवत्व—स्नेहादयोऽपि धर्मिस्वरूपाः व्याख्याताः ॥

## २३. प्रकृते विषयवैलक्षण्यानङ्गीकारे विज्ञानवादप्रवेशतद्दोषतादवस्थ्यम्

किञ्च—'भूतले घटो नास्ति' इति प्रतीतिरेव घटस्य प्रतियोगित्वे, अभावस्य अनुयोगित्वे, भूतलस्य आधारत्वे, अभावस्य आधेयत्वे च प्रमाणम् । तत्र विषयविशेषानङ्गीकारे कथं प्रतीतेस्तद्विषयत्वावच्छेदेन वैलक्षण्यं भासेत ? सामग्रीभेदाभावेऽपि विषयवैलक्षण्याभावे च स्वत एव प्रतीतिवैचित्र्याङ्गीकारे कथं वा[5] विज्ञानवादनिरासः ?[6]

---

[1] सामग्रीवैलक्षण्यादेव प्रतीतिवैलक्षण्यस्य त्वयैवोक्तत्वादिति भावः । [2] स्वरूपत्वादिग्रह (ख) [3] स्वरूपरूपत्वेऽपि (ख) [4] प्रतियोगित्वादीनां धर्मिस्वरूपत्वाविशेषेऽपि प्रतियोगित्वात्मकधर्मिग्रहे अन्वयव्यतिरेकसिद्धकारणतावद्विशेषः अपेक्षितः । स च कारणत्वात्मकधर्मिग्रहे नोपयुज्यते । तथा च कारणभेदः स्वीकार्यः इत्याशयः । [5] वा इति नास्ति (ख) [6] कथं न विज्ञानवादः (ख)

२४. एतेन विशेषपदार्थनिराससिद्धिः

एतेन—मध्वमतसिद्धः विशेषोऽपि[1] निरस्तो वेदितव्यः ।

२५. तदुपपादनम्—तत्र तस्य धर्मिस्वरूपत्वानुपपत्तिः

तथाहि—सः किं धर्मिस्वरूपः ? अतिरिक्तो वा ? नाद्यः । स्वरूपसम्बन्धनिरासेन तस्य[2] निरस्तत्वात् । किञ्च 'सत्ता सती' 'भेदो[3] भिन्नः[4]' 'कालः सदाऽस्ति' 'देशः सर्वत्र' इत्यादौ अभिन्ने भेदव्यवहारनिर्वाहकत्वेन सः स्वीक्रियेत[5] । न च वस्तु स्वरूपस्य तन्निर्वाहकत्वं सम्भवति । अविलक्षणत्वात् ।

२६. अतिरिक्तत्वानुपपत्तिः

न द्वितीयः । त्वया अतिरिक्तत्वानङ्गीकारात् ।[6] [7] "स्वभाव-विशेषस्यैव अस्माभिः विशेषशब्देनोक्तिः "[8] इति ; "अयं च विशेषः[9] वस्त्वभिन्नः स्वनिर्वाहकश्चेति नानवस्था " इति च[10] न्यायामृत एवोक्तेः ।[11]

२७. अतिरिक्तत्वाङ्गीकारेऽपि विकल्पः

यदि च-धर्मिस्वरूपत्वे स्वरूपसम्बन्धदूषणग्रासात् अतिरिक्तत्व-मंगीक्रियेत, तथापि न निस्तारः । तथाहि[12]—धर्मिस्वरूपाति-

---

[1] 'अपि' इति नास्ति (ख) [2] 'तस्य' इति नास्ति (ख) [3] तद्भेदो (क) [4] भेदो हि स्वप्रतियोग्यनुयोगिभ्यां भिन्नः इति तथाप्रतीतिः । [5] सोऽङ्गी-क्रियते (ख) [6] अनतिरिक्तत्वाङ्गीकारात् (ख) अन्यथा हि अनवस्था दुर्वा-रेति भावः । [7] अमुमेवार्थं तदीयोक्त्या प्रमाणयति—स्वभावेत्यादिना । [8] शब्देनैवोक्तिः (ख) [9] विशेषपदार्थः । [10] च इति नास्ति (क) [11] न्यायामृतोक्तेः (ख) [12] 'न निस्तारः, तथाहि' इति नास्ति (क)

रिक्तस्य विलक्षणव्यवहारे हेतुत्वं[1] विषयतया वा ? ताटस्थ्येन वा ?[2] इति विचारणीयम् ।

२८. तत्र विशेषस्य विषयतया व्यवहारहेतुत्वानुपपत्तिः

[3]तत्र—नाद्यः, एकस्यावैलक्षण्येन[4] विलक्षणव्यवहारानियामकत्वात्। नियामकत्वे वा विशेषेणैव सर्वव्यवहारोपपत्तौ[5] विषयान्तरापलापप्रसङ्गात् । अनेकस्य विषयतया[6] नियामकत्वाङ्गीकारे तत्तत्प्रतीतिबलात् तत्तद्विषयमंगीकृत्य, तस्यैव 'विशेषः' इति नामकरणं कृतं[7] स्यात् ।

२९. ताटस्थ्येन च व्यवहारहेतुत्वानुपपत्तिः

न द्वितीयः—ताटस्थ्येन प्रतीतिवैलक्षण्यनियामकत्वे विषयमात्रापलापप्रसङ्गात् ।

३०. प्रकारान्तरेणानुपपत्तिपरिहाराशङ्का

[8]न च—यत्र विषयविशेषः प्रमाणसिद्धः, तत्र तेनैव प्रतीतिवैलक्षण्यम् । यत्र तु विषयाव्यतिरेकेण[9] प्रतीतिवैलक्षण्यं, तत्र तु विशेषो नियामकः इति न विषयापलापः—इति वाच्यम् ।

---

[1] व्यवहारनिर्वाहकत्वं (क) [2] विषयतया ताटस्थ्येन वा इति विकल्पस्य ज्ञाततया अज्ञाततया वा इत्यर्थः । [3] ज्ञाततया विलक्षणव्यवहारहेतुत्वं विशेषस्य इति प्रथमकल्पे सः विशेषः समवायवत् एकः ? उत अनेकः ? इति पुनर्विकल्पे—एकत्वे दूषणमाह एकस्येत्यादिना । [4] साधारणत्वेनेत्यर्थः । 'अवैलक्ष्येण' (क) [5] पपत्तेः (क) [6] विधेयतया (क) [7] 'कृतं' इति नास्ति (ख) [8] स्वाशयं स्पष्टयति–न चेत्यादिना । [9] विषयभेदाभावेऽपीत्यर्थः ।

## ३१. तद्दूषणेन स्वाभिप्रायनिवेदनम्

प्रतीतिरेव हि विषयसद्भावे प्रमाणम् । विषयमन्तरेणापि[1] प्रतीतिनिर्वाहे विशेषेण कृते विषयमात्रापलापो दुर्वारः ।

## ३२ विशेषस्यैव भेदस्थानापन्नत्वस्याप्यसम्भवोपपादनम्

एतेन—

" यत्र भेदमन्तरेणापि भेदकार्यं दृश्यते, तत्रैव भेदप्रतिनिधिः विशेषः भेदकार्यनियामकः कल्प्यते, नान्यत्र—इति नातिप्रसङ्गः ॥"

उक्तं च—

" भेदहीनेऽप्यपर्यायशब्दान्तरनियामकः ।
विशेषो नाम कथितः सर्ववस्तुष्वशेषतः ॥[2] " इति

इत्याद्यपि[3] निरस्तम् । तटस्थेन[4] विशेषेण[5] विषयवैलक्षण्यमन्तरेणैव प्रतीति-शब्दवैलक्षण्यनिर्वाहे तदतिरिक्त[6]विषयकल्पनायां मानाभावात् । अभिन्नेऽपि भेदव्यवहारनियामकेन विशेषेणैव घटपटादावपि भेदव्यवहारोपपत्तौ, तत्र भेदः[7] न स्यात् ।

## ३३. अत्र च सोमपूतिकावैलक्षण्यसत्त्वात् मुख्यामुख्यादिविभागपरिकल्पनानौचित्यम्

न च मुख्यभेदस्थले[8] न प्रतिनिधिसम्भवः,[9] सोमस्थले[10] इव पूती-

---

[1] मन्तरेण (क) [2] अन्ततः विषयत्वादीनां केवलान्वयिनां स्वरूपरूपाणां सर्ववस्तुषु विद्यमानत्वादिति भावः । अत्र 'सर्व'-शब्दस्थाने स्वरूपशब्दः (क,ख) [3] इति (ख) [4] ताटस्थ्येन (क) [5] विशेषण (क) [6] तत एवातिरिक्त (क) [7] विषयभेदः । भेदाङ्गीकारः । [8] घटपटादिप्रसिद्धभेदसत्तास्थले । [9] प्रतिनिधिस्थानापन्नस्य विशेषस्य न संभवः । [10] मुख्यस्य सोमस्यैव लाभे इत्यर्थः ।

कानामिति वाच्यम् । सोमपूतिकासाधनत्वस्य वाचनिकत्वात्[1], वचनबलादेव तादृशी व्यवस्था तत्र युक्ता[2] । विशेषस्य तु कल्प्यत्वात्, लाघवेन, सर्वत्र भेदव्यवहारमात्रजनकत्वेन कल्पनोपपत्तौ[3], क्वचिद्विशेषः क्वचिद्भेदः इति कल्पनायाः अयोगात् ।

३४. अन्यथा सत्ताजातेरपि असिद्धिप्रसङ्गापादनम्

किञ्च—'सत्ता सती' इत्यत्र, सत्ताप्रकारकसत्ताविशेष्यकबोधस्य[4] एकस्यामपि सत्तायां विशेषनिर्वाह्यत्वे, 'सन् घटः' इत्यादावपि सत्ताजातिं विनैव सत्ताप्रकारकबोधस्य विशेषादेव सम्भवात्[5] सत्ताजातिरपि न सिद्ध्येत् ।

३५. अनुगतव्यवहारार्थमपि सत्ताजात्यङ्गीकारावश्यकत्वाभावः

न च अनुगतव्यवहारात् तत्सिद्धिः । अभिन्ने[6] भेदकार्यवत्, अनेकेषु अनुगतव्यवहारस्यापि विशेषादेव सम्भवेन जातेः[7] अकल्पनात् ।

३६. सर्वव्यवहारस्यापि अविद्ययैव निर्वाहे विशेषकल्पनानावश्यकता

[8]वस्तुतस्तु —प्रत्यक्षादिसिद्धवस्तुषु सर्वासामनुपपत्तीनां अविद्ययैव[9] श्रुतिसिद्धया शान्तेः, न विशेषकल्पनम् । यथा ऐन्द्रजालिकनिर्मितमायया असम्भावितावभासः, एवं अविद्ययाऽपि—

---

[1] 'सोमाभावे पूतीकग्रहणम्' इति वचनसिद्धत्वात् । [2] व्यवस्था इत्ययुक्ता (ख) [3] विशेषकल्पनोपपत्तौ इत्यर्थः । [4] बोधने (क) [5] पूर्वोक्तन्यायेनेति शेषः । [6] अभिन्नेऽपीति यावत् । [7] सत्तादिजातेः कल्पनावश्यकताया एव अभावादित्यर्थः । [8] तत्कृतासत्सिद्धान्तानुवादानुसारेणाप्याह—वस्तुतस्तु इति । [9] विनिगमकोक्तिः श्रुतीत्यादिना ।

अभिन्ने भेदकार्यम्, [1]भिन्नेऽप्यभेदकार्यम् इत्यादि सर्वव्यवहार-सामञ्जस्योपपत्तेः ।[2]

तदुक्तं टीकायाम्[3]—

"न हि मायायां असम्भावनीयं नाम ।
[4]असम्भावनीयावभासचतुरा हि सा ॥" इति ।

## ३७. अविद्ययैव सत्यज्ञानादिपदानां अपर्यायत्वसिद्धिः

अत एव—"सत्यज्ञानानन्दादिपदानां अपर्यायत्वार्थं[5] विशेष-कल्पनम्" इत्यपि[6] निरस्तम् । अविद्याया एव[7] तत्सामर्थ्य-कल्पनोपपत्तौ विशेषाकल्पनात् ।

## ३८. तेषां वाच्यार्थव्यावर्त्यभेदाभ्यां अपर्यायत्वसार्थक्ये

किञ्च—सत्यादिपदानां वाच्यार्थभेदात् अपर्यायत्वम्[8], व्यावर्त्य-भेदाच्च[9] न वैयर्थ्यम् इति, न तदर्थमपि वा[10] विशेषोपयोगः ।

## ३९. तत्र व्यावृत्तिस्थानविवरणम्

न च—व्यावृत्तीनां ब्रह्मातिरिक्तत्वे अद्वैतहानिः, अनतिरिक्तत्वे[11] तत एव[12] पदार्थान्तरवैयर्थ्यमिति वाच्यम् । व्यावृत्तीनां ब्रह्मा-नतिरिक्तत्वेऽपि[13], व्यावृत्तिप्रतियोगिनां जडादीनां[14] भेदेन अप-

---

[1] भिन्नेऽभेद (ख) [2] सामरस्योपपत्तेः (क) तदर्थं विशेषादिपरि-कल्पनायाः आवश्यकत्वस्यैवाभावादिति भावः । [3] अस्मन्मतानुवादकाले इति शेषः । [4] सम्भा (क) ? [5] अर्थभेदसिद्ध्यर्थमित्यर्थः । [6] इति (क) [7] अविद्याप्रभावादेवेत्यर्थः । [8] न पर्यायत्वम् (क) [9] व्यावृत्त्यभेदाच्च (क) [10] तदर्थं (क) [11] अनतिरेके (क) [12] तदेव (क) [13] ब्रह्मानतिरेकोऽपि (क) [14] घटादीनां (क)

र्यायत्वोपपत्तेः । [1] एकस्य अनेकप्रतियोगिकत्वस्य सामान्याभावादौ[2] सर्वत्र सम्प्रतिपत्तेः ।

## ४० विशेषाङ्गीकारे प्रयोजनान्तरस्यापि निराकरणम्

न च — एकस्यानुयोगिनः अनेकरूपत्वं विशेषनियम्यमिति[3] वाच्यम्[4] । अविषयीभूतस्य[5] नियामकत्वे, अविद्यायाः[6] धर्मिस्वरूपस्य वा नियामकत्वकल्पनयैव[7] उपपत्तेः, विशेषकल्पनस्य निर्मूलत्वात् ।

ब्रह्मण एव[8] सर्वव्यवहारनियामकत्वं कल्प्यताम्[9], लाघवात् ।

## ४१. पक्षान्तरेण सत्यादिपदसार्थक्योपपादनाङ्गतया पृथक्त्वान्योन्याभावयोः विषयभेदोपपादनम्

नवीनास्तु—सर्ववस्तूनां भावस्वरूपं[10] सर्वतोभिन्नमङ्गीकर्तव्यम् । [11]अन्योन्याभावादिलक्षणभेदस्य स्वतः अभिन्ने असम्भवात् । न हि घट एव घटान्योन्याभावः[12] सम्भवति ।

---

[1] ननु जडो नाम न कश्चन अखण्डः पदार्थः । अतः तत्प्रतियोगिकभेदः न कश्चन भवितुमर्हति, इति जडभेदः अप्रामाणिक एवेत्यत्राह— एकस्येति । [2] घटसामान्याभाववति भूतले शुक्लनीलादिसकलघटव्यक्तीनां घटत्वेनानुगतीकृतानां अभावस्याङ्गीकारात् जडत्वावच्छिन्नभेदोऽपि प्रामाणिक एवेति भावः । [3] विशेषणीयमिति ? (क) [4] एवं च अनेकानां धर्मिस्वरूपाणां वैलक्षण्यनियामकतया विशेषसार्थक्यमित्यभिमानः । [5] विशेषस्येति शेषः । [6] अविद्यया (क) [7] कल्पनया (ख) [8] 'वा' इति नास्ति (ख) [9] सर्वकारणत्वात् ब्रह्मणः इति भावः । [10] वस्तूनां स्वरूपं तावत् (क) [11] विलक्षण (क) [12] घटसामान्याभावः (क)

न च—'घटः घटो न' इति प्रतीतेरसम्भवात्[1], न तत्र तदन्योन्याभावः, पटे तु तथा प्रतीतेः सत्त्वात् तदन्योन्याभावः—इति वाच्यम्। पटस्य [2]घटस्वरूपाद्भिन्नत्वेनाप्रतीतौ, तत्रापि[3] अन्योन्याभावबुद्धेः असम्भवात्।

न च—प्रतियोग्यवृत्त्यनुयोगिवृत्तिधर्मप्रतीतौ[4] अन्योन्याभावभानमिति वाच्यम्। स्वरूपभेदाप्रतीतौ तादृशधर्मस्याप्यभावात्[5]। सर्वथा[6] समानाकारक[7]व्यक्तिद्वय[8]धर्मधर्मिणोः स्वरूपभेदाभावे अन्योन्याभावबुद्धेः दुरुपपादत्वाच्च[9]। प्रतियोग्यवृत्तित्वस्य अनुयोगिवृत्तित्वस्य च धर्मिद्वये भेदभानाधीनत्वात्, तत्रापि स्वरूपभेदाभाने अन्योन्याभावादिभेदस्याप्यभानात।[10]

[11]तस्मात् घटः तावत्सदृशेभ्यो विसदृशेभ्यश्च स्वरूपत एव भिन्नः। तत्र "इदमस्मात् पृथक्" इति प्रत्ययात् पृथक्त्वम्, 'इदमिदं न' इति प्रत्ययात् अन्योन्याभावः इत्यादिरूपेण धर्माः[12] कल्प्यन्ते।

तत्र — स्वरूपतः[13] स्वतोविलक्षणे धर्मिणि तत्तत्प्रमाणबलात् साधारणाश्च[14] धर्माः सिद्ध्यन्ति, न तु अविलक्षणे एव अभिन्ने वस्तुनि इति॥

---

[1] रभावात् (क) [2] स्वरूपेणभि (क) [3] 'तत्रापि' इति नास्ति (क) [4] प्रतीतावेवेत्यर्थः। 'घटः पटो न' इत्यादौ तथा प्रतीतिः स्पष्टैव। [5] व्यभावात् (क) [6] सर्वदा (क) [7] कार (क) [8] द्वये (क) [9] दुर्वदत्वाच्च (क) [10] भेदस्याभानात् (ख) [11] घटव्यक्तिषु परस्परं भेदे सत्यपि 'घटः घटो न' इति न प्रतीतिः। किन्तु 'अयं घटः तद्घटो न' इत्येव। तथा च पृथक्त्वान्योन्याभावयोः आवश्यकता सिद्धेति भावः। [12] इत्यादिधर्माः (क) [13] सर्वतः (क) [14] साधारणा असाधारणाश्च (क)

४२ कल्पितानामपि व्यावृत्तीनां पर्यायपदान्तरवैयर्थ्यनिमित्तत्वाभावः

प्रकृते[1] एवं ब्रह्मस्वरूपमपि वस्तुत एव[2] जडादिव्यावृत्तं चिद्रूपं सुखस्वरूपं सद्रूपं च। तादृश[3]स्वरूपमेव[4] सत्यादिपदैः बोध्यते। तत्र अभेदश्रुत्या ज्ञानत्वादिधर्मानङ्गीकारेऽपि ज्ञानादिस्वरूपत्वं तावदङ्गीक्रियते।

एवं च ज्ञानपदेन ज्ञानस्वरूपत्वबोधेऽपि सुखपदव्यतिरेकेण सुखस्वरूपत्वं कथं प्रतीयताम्?

तस्मात्—न पदान्तरवैयर्थ्यशङ्कावकाशः।

एवं च—ज्ञानत्वादिधर्मैः कल्पितैः[5] यथा वाच्यार्थभेदः, एवं जडादिप्रतियोगिव्यावृत्तयोऽपि कल्पिता एव विनावैयर्थ्यनिमित्तं[6] भवन्तु।

न च जडव्यावृत्तेः[7] कल्पितत्वे, ब्रह्मणो जडत्वप्रसङ्गः। व्यावृत्तिरूपधर्मस्य कल्पितत्वेऽपि व्यावृत्तधर्मि[8]स्वरूपस्य अव्यावृत्तत्वासम्भवात्॥

४३. तस्य च सत्यज्ञानादिपदप्रयोगस्थलेऽपि समन्वयः

एवं यथा ज्ञानत्वादिधर्मनिवृत्तावपि ज्ञानस्वरूपत्वं नापैति[9], एवं धर्मभूतव्यावृत्तीनां निवृत्तावपि व्यावृत्तस्वरूपत्वं नापैति। न हि मुक्तौ सत्यादिस्वरूपभानवत् व्यावृत्तिप्रकारकबोधोऽस्ति[10], येन—तदानीमपि व्यावृत्तयो धर्माः अङ्गीक्रियेरन्॥

---

[1] प्रकृते इति नास्ति (ख) [2] एवेति नास्ति (ख) [3] सद्रूपमित्यादि-तादृश (ख) [4] सत्स्वरूपमेव (क) [5] धर्मितैः (ख) [6] वैयर्थ्याभावायेत्यर्थः। अवैयर्थ्यनिमित्तं (क) [7] जडादिव्यावृत्तेः (ख) [8] व्यावृत्तिधर्म (क) [9] नापयाति (क) [10] व्यावृत्तिभान प्रति प्रतियोगिभानस्यावश्यकत्वात्, स्वरूपमात्रभानस्यैव मुक्तिस्वरूपत्वादिति भावः।

४४ व्यावृत्तीनां ब्रह्मभिन्नत्वेऽप्यविरोधः सत्यादिसर्वपदसार्थक्यं च

एवं च व्यावृत्तीनां ब्रह्मभिन्नत्वेऽपि नाद्वैतहानिः ? अविद्यानिवृत्तौ तन्निवृत्तेः ।

न च वेदान्तानां अतत्त्वावेदकत्वप्रसङ्गः; सर्वतः स्वरूपेण व्यावृत्तसत्यादिस्वरूपस्यैव तत्र[1] बोधनात् । वाक्यार्थबोधसमये[2] व्यावहारिकत्वा[3]दिकमादाय अपर्यायत्ववत्, तादृशव्यावृत्तिमादाय अवैयर्थ्योपपादनस्य सिद्धान्तेऽपि अविरुद्धत्वात् ।

४५. प्रकारान्तरेणापि निर्वाहः

अर्थवादपदानां यथा सम्भूय प्राशस्त्यलक्षकत्वं, एवं सत्यादिपदानामपि सम्भूयैव सत्यादिस्वरूपविशेषलक्षकत्वम्, 'प्रयुक्ताद्धि' इति न्यायात् इत्यप्याहुः ॥

४६. अविद्ययैव विशेषपदार्थान्यथासिद्धिदृढीकरणम्

यदपि—"स्वप्रकाशचैतन्ये भासमाने[4], निरतिशयानन्दस्य जीवब्रह्मैक्यस्य च इदानीं अभासमानत्वात् तन्नियामकत्वेन विशेषकल्पनम्—इति, तदपि न । वास्तवभेदाभावेऽपि अविद्यया निरतिशयानन्दैक्यादेर्भेदस्य कल्पितत्वेन तत्तदंशावरणत्वोपपत्तेः । ब्रह्मस्वरूपमेव सत् यदिदानीं न भासते, तत्सर्वं अविद्यानिबन्धनभेदभिन्नं सत् आवृतम्—इत्येव[5] कल्प्यते ।

एतेन—एकस्यैव[6] आवृतत्वं अनावृतत्वं च विशेषानंगीकारे कथं सङ्गच्छेतेत्यपि निरस्तम्, अविद्याकल्पितेन भेदेन[7] एकत्वाभावात्।[8]

---

[1] स्वरूपस्य (ख) [2] समय (क) [3] व्यावहारिकज्ञानत्वा (क) [4] अहमिति प्रतीतौ आत्मनः भानांगीकारात् एवमुक्तम् । [5] इति (ख) [6] एकस्य [7] कल्पितभेदेन (क) [8] अविद्या हि अघटितघटनापटीयसी इति भावः ।

## ४७. विशेषानङ्गीकारनिगमनम्

तस्मात् धर्मिस्वरूपः तदतिरिक्तो वा[1] विशेषो निष्प्रमाणकः इति सिद्धम्[2] । एवं च तत एव[3] कारणत्वादयोऽपि धर्मिस्वरूपातिरिक्ता एव[4] प्रमाणबलात् स्वीकर्तव्याः ॥

## ४८. आवश्यकत्वे सति पदार्थानां आनन्त्यस्य अदोषत्वम्

न चैवं अनन्तपदार्थस्वीकारापत्तिः । प्रमाणबलायातवस्त्वानन्त्यस्य अदोषत्वात् । पृथिव्यादिव्यक्तीनामपि[5] आनन्त्या[6]विशेषे कथञ्चित् गन्धवत्त्वादिक्रोडीकारधर्मेण अनुगमं कृत्वा 'नव द्रव्याणि' 'चतुर्विंशतिः गुणाः' इति परिभाषामात्रेण आनन्त्यपरिहारे; पदार्थमात्रस्य धर्मधर्मिभेदेन द्वैविध्येन वा, अनेकवृत्तिधर्मस्य च भावत्वस्य[7] विशेषितस्य वा[8] सामान्यत्वमङ्गीकृत्य प्रतियोगित्वादीनामपि सामान्यान्तर्भावेण वा[9], द्रव्यादिपञ्चकभिन्नत्वेन गुणलक्षणमङ्गीकृत्य[10] गुणान्तर्भावेण वा कथंचित् आनन्त्यपरिहारस्यापि[11] सम्भवात् ।

तस्मात् भेदस्यापि न धर्मिस्वरूपत्वम्, पूर्वोक्तसंशयाद्यनुपपत्तेः[12] तुल्यत्वात् ।

## ४९. दोषान्तरोपपादनेन भेदस्य धर्मिस्वरूपत्वाभावनिगमनम्

किञ्च भेदस्य धर्मिस्वरूपत्वे[13] अभेदोऽपि धर्मिस्वरूप एव नाति-

---

[1] रूपस्त्वतिरिक्तो (ख) [2] सिद्धमिति नास्ति (ख) [3] तस्मात (क) [4] तथा च कारणत्वस्य धर्मिस्वरूपत्वे भेददृष्टान्तत्वं न सम्भवतीति भावः । [5] अपि इति नास्ति (ख) [6] आनन्त्यादि (क) [7] भावत्व (ख) [8]-[9] वा इति नास्ति (क) [10] एकत्वपृथक्त्वादिवत् इति शेषः । [11] 'अपि' इति नास्ति (ख) [12] पूर्वोक्तानुपपत्तेः (क) [13] धर्मिस्वरूपस्य भेदत्वे (क,ख)

रिक्तः । मानाभावात् । तथाच घटस्वरूप एव[1] भेदः अभेद-श्चेति भेदाभेदयोः एकत्र अविरोधप्रसङ्गः ।

न च—घटस्य स्वापेक्षया अभेदः, अन्यापेक्षया[2] तु भेदः, इति नोक्तदोषः इति वाच्यम् । घटस्वरूपस्यैव भेदत्वे स्वापेक्षयाऽपि[3] भेदत्वप्रसङ्गात्[4] । स्वापेक्षया अभेदत्वे पटापेक्षयाऽप्यभेदत्व-प्रसङ्गः[5], घटस्वरूपे[6] विशेषानवगमात् । कारणत्वादिप्रतिबन्द्याश्च निरस्तत्वात् । 'घटः अभिन्नः, भिन्नः,'[7] इत्यादीनां[8] पर्यायत्व-प्रसङ्गाच्च । घटत्वातिरिक्त[9]प्रवृत्तिनिमित्तस्य तत्र अभावात् । तस्मात् धर्मिस्वरूपपक्षः[10] न क्षोदक्षमः ।

## ५०. भेदस्य धर्मस्वरूपत्वखण्डनारम्भः

अस्तु तर्हि—नीलादिवत्[11] धर्मः कश्चित् भेदः[12] इति द्वितीयः पक्षः इति चेत्—न ।

सः धर्मः किं भावरूपः ? अभावरूपो वा ?

## ५१. तस्य भावरूपत्वानुपपत्तिः

भावरूपत्वेऽपि[13] पृथक्त्वं विभागो वा ? द्वयमपि न सम्भवति[14]

---

[1] स्वरूपमेव (ख) [2] पटापेक्षया (ख) [3] 'अपि' इति नास्ति (क) [4] स्वरूपत्वादेवेति शेषः [5] अभेदरूपत्वप्रसङ्गः इत्यर्थः । [6] घटस्वरूपे (ख) [7] भिन्नः इति नास्ति (ख) [8] इत्यादिना (क) [9] घटत्वव्यतिरिक्त (क) [10] तस्मात् भेदस्य धर्मिस्वरूपत्वपक्षः इत्यर्थः । धर्मिस्वरूपभेदः न क्षोदीयान्' इति (ख) [11] नीलादिवत् इति नास्ति (क) [12] भेदशब्दवाच्यः इत्यर्थः । [13] अपीति नास्ति (ख) [14] भेदस्य पृथक्त्वस्वरूपत्वे, पृथक्त्वस्य गुणत्वात् गुणे गुणासम्भवात सर्वत्र गुणादौ भेदाभावप्रसङ्गः इति भावः ।

गुणादेः भेदाभावप्रसङ्गात्, विभागपक्षे संयुक्तयोः[1] भेदो न स्यात् ।

## ५२. तत्रापि पृथक्त्वरूपत्वानुपपत्त्युपपादनम्

पृथक्त्वस्य प्रतीतिबलात् गुणादिवृत्तित्वाङ्गीकारे पृथक्त्वस्य भेदः न स्यात्[2] । पृथक्त्वे पृथक्त्वान्तरानङ्गीकारात् । अन्योन्याभावेनैव पृथक्त्वव्यवहारोपपत्तौ अतिरिक्तपृथक्त्वानङ्गीकाराच्च ।[3]

## ५३. पृथक्त्वस्य अन्योन्याभावरूपत्वे दोषाशङ्कानिवारणम्

न च—"अन्यारादितरर्ते"[4] इति सूत्रे अन्यशब्दस्य अर्थपरत्वेन 'इदमस्मात्पृथक्' 'भिन्नम्'[5] इत्यादिवत् 'इदमस्मान्न' इत्यपि प्रयोगापत्तिः इति वाच्यम् ।

विभक्त्यनुशासनस्य शब्दविशेषा[6]धीनत्वस्य सर्वसम्प्रतिपत्तेः । अन्यथा 'घटात्प्रमेयम्' इत्यपि प्रयोगापत्तिः ।[7] प्रमेयादिशब्दानामपि पृथक्त्वार्थकत्वात् ।

## ५४. भेदस्य पृथक्त्वविशेषरूपत्वानुपपन्नत्वस्याप्युपपादनम्

न च 'असाधारण्येन पृथक्त्वार्थकत्वं अभिमतम्' इति वाच्यम् ।

---

[1] संयोगयोः (क) [2] पृथक्त्वे भेदो न स्यादित्याशयः । [3] 'च' इति नास्ति (क) [4] "अन्यारादितरर्ते दिक्छब्दाञ्चूत्तरपदाजाहियुक्ते" (पा.सू. २,३,१७) इति पूर्णं सूत्रम् । अन्येत्यादिभिर्योगे पञ्चमी स्यादित्यर्थः । अत्र 'अन्य' इति न केवलं अन्यशब्दो विवक्षितः किन्तु अन्यपदार्थकाः सर्वेऽपि शब्दाः, व्याख्यानात इत्युक्तम् । 'तेन अन्यः कृष्णात्' इतिवत्, 'भिन्नः कृष्णात्' इत्यपि सिद्ध्यति । [5] इदमस्माद्भिन्नमित्यर्थः । [6] प्रयुक्तसिद्धशब्दविशेषेत्यर्थः । [7] पृथक्त्वस्यापि प्रमेयरूपत्वात् । सामान्य पदानां विशेषपरत्वस्य सर्वसम्प्रतिपन्नत्वात् इति भावः । प्रयोगापत्तेः (क)

कथञ्चिदर्थविवक्षायां अतिप्रसङ्गभयेन, अर्थविशेषविक्षायां नञ्-भिन्नत्वेनापि शब्दविशेषणे[1] बाधकाभावात् । नञोऽपि अन्योन्याभावात्यन्ताभावसाधारणार्थकत्वेन, असाधारण्येन तदर्थकत्वाभावाच्च ।[2] किञ्चिदिष्टसंग्रहार्थं[3] अर्थपरत्व[4]व्याख्यानस्य अभिमतमात्रसंग्राहकत्वाच्च ।

अत एव—"व्याख्यानतो विशेषप्रतिपत्तिः न हि संदेहादलक्षणम्" इत्यादिः ; "[6]अभिधानलक्षणाः कृत्तद्धितसमासाः" इत्यादिश्च वैयाकरणानां प्रयोगशरणत्वोद्घोषः ।

## ५५. भेदस्य भावरूपधर्मत्वाभावनिगमनम्

तस्मात् विभागः पृथक्त्वं वा न भेदः ।

## ५६. भेदस्य अन्योन्याभावरूपत्वानुपपत्त्युपपादनारम्भः, तत्र अन्योन्यात्यन्ताभावयोः सारूप्यापत्तिः

अभावत्वेऽपि—किमन्योन्याभावः ? अत्यन्ताभावो वा ? नाद्यः । प्रतियोग्यनिरूपणात् । न हि घटादिकमत्र[7] प्रतियोगि इति वक्तुं शक्यम् । तर्हि 'घटो नास्ति' 'घटो न भवति' इत्युभयत्रापि घटस्यैव प्रतियोगित्वेन अत्यन्ताभावान्योन्या[8]भावयोः भेदो न स्यात् ।

---

[1] सूत्रस्थान्यशब्दविशेषणे इत्यर्थः । [2] भिन्नार्थकत्वाभावाच्चेत्यर्थः । [3] कृतस्येति शेषः । [4] धर्मपरत्व (क) धर्मपर (ख) [5] यत्र क्वापि संदेहे सति तत्र अन्यतरार्थरूपविशेषांशनिर्धारणं तदभिज्ञकृतविवरणादेव कर्तव्यम् । संदेहहेतुत्वादेव मूलस्य अप्रमाणत्वं न संभवतीत्यर्थः । [6] अभिधानं—बहुलः प्रयोगः । प्रयोगमात्रनिवम्याः कृत्तद्धितसमासाः इत्यर्थः । उदाहरणमात्रमिदम् । सर्वत्राप्येवमेवेतिभाव्यम् । [7] दिकमेव (क) [8] 'अत्यन्तान्योन्या' (ख)

उभयत्रापि घटत्वस्यैव अवच्छेदकत्वेन अवच्छेदकभेदस्याप्यभावात् ।[1]

५७. आरोप्यसम्बन्धभेदात् तयोर्भेदोपपादननिरासः

न च तद्भेदाभावेऽपि[2] क्वचित् तादात्म्यारोपः, क्वचित् संसर्गारोपः इति आरोप्यसम्बन्धभेदात् भेदः इति वाच्यम् । 'भूतले घटो नास्ति' 'भूतलं घटवन्न भवति' इत्युभयत्रापि संसर्गस्यैव[3] आरोप्यत्वेन भेदानापत्तेः ।

न च—एकत्र[4] संसर्गः संसर्गत्वेनारोप्यते, इतरत्र[5] तादात्म्यत्वेनेति भेदः इति वाच्यम् । संसर्गत्वतादात्म्यत्वयोः भेदेन निर्वक्तुमशक्यत्वात् । 'संयोगि न' इत्यत्र संयोगस्यैव[6] तादात्म्यत्वात् ।

५८. प्रतियोगितावच्छेदकतत्सम्बन्धारोपभेदेनापि तयोर्भेदोपपादनखण्डनम्

न च—यत्र प्रतियोगितावच्छेदकतादात्म्यस्यारोपः सः अन्योन्याभावः[7], यत्र तु प्रतियोगितावच्छेदकसम्बन्धस्यारोपः सः अत्यन्ताभावः—इति वाच्यम् । तदा 'संयोगी घटो नास्ति' इत्यत्र प्रतियोगितावच्छेदकसंयोगस्यैव[8] आरोप्यत्वात्, 'संयोगी न'

---

[1] 'प्यभावाच्च (ख) [2] 'घटः पटो न' इत्यादौ तादात्म्यनिषेधः । तच्च तादात्म्यं आरोपात्मकमेव, पटे घटतादात्म्यासम्भवात् । 'भूतले घटो न' इत्यादौ तु घटसंसर्गस्यैव निषेधः इति भाव्यम् । [3] 'एव' इति नास्ति (ख) [4] अत्यन्ताभावस्थले । [5] अन्योन्याभावस्थले । [6] संयोगस्य (ख) [7] यत्र प्रतियोगितावच्छेदकतादात्म्यं तत्र प्रतियोगितावच्छेदकमारोप्य निषेधः सः अन्योन्याभावः (क) [8] संयोगस्य (ख)

इत्यस्मात् भेदो न स्यात् ।[1]

५९. तादात्म्यारोपसंसर्गारोपभेदेनापि तयोर्भेदोपपादनदूषणम्

न च—'संयोगी न भवति' इत्यत्र संयोगत्वेन संयोगः प्रतियोगितावच्छेदकः तादात्म्यत्वेनारोप्यते । "इह संयोगी नास्ति"[2] इत्यत्र तु संयोगित्वेन रूपेण अवच्छेदकत्वेन, तेन रूपेण नारोप्यत्वम्, किन्तु संसर्गमर्यादया स्वरूपविशेषेण भेदः—इति वाच्यम् । तथापि—'इदं संयोगि' इति तादात्म्यारोपे, 'संयोगि अत्र' इति संसर्गारोपे चेत्युभयत्रापि समवाय–संयोग समवायप्रतियोग्यधिकरणचतुष्टयव्यतिरेकेण विषयान्तरानवगमेन आरोपभेदासम्भवात् । स्वरूपविशेषविषयत्वेन भेदस्य स्वरूपविशेषानिर्वचनेनैव निरस्तत्वात् ।

६०. प्रतीतिवैलक्षण्येन तयोर्भेदोपपादनाशङ्का

ननु—मास्त्वारोपे विषयभेदः । तथापि 'इदमिह[3] नास्ति' 'इदमिदं न भवति' इति प्रतीत्योः वैलक्षण्यमनुभूयते । तत्र च अत्यन्ताभावात्[4] अन्योन्याभावोऽपि विलक्षणः अङ्गीकर्तव्यः । अन्यथा अत्यन्ताभावोऽप्यतिरिक्तो न स्यात् । उक्तं च—"संविदेव हि भगवती विषयसत्त्वोपगमे नः शरणम्" इति ।

६१. तेन अतिरिक्तान्योन्याभावनिषेधसिद्धिपक्ष–तत्खण्डने

एतेनैव धर्मात्यन्ताभावेन[5] धर्म्यन्योन्याभावबुद्ध्यन्यथासिद्धौ धर्मिणो नातिरिक्तान्योन्याभावः ।

न च—'घटत्वं नास्ति' इत्यत्र घटत्वं प्रतियोगि, तत्त्वं च[6]

---

[1] भेदाभावप्रसङ्गात् । [2] इदं संयोगि नास्ति (क) [3] तथापीह (ख)
[4] अत्यन्ताभाववत् (ख) [5] भावेनैव (क) [6] प्रतियोगित्वं च (क)

प्रतियोगितावच्छेदकं भासते । 'घटो न भवति इत्यत्र तु घटत्वं प्रतियोगितावच्छेदकम्, घटश्च प्रतियोगी । ततश्च अवच्छेदकात्यन्ताभावविषयत्वे अन्योन्याभावबुद्धेः 'घटत्वं नास्ति' इत्येवमाकारः स्यात् । न तु 'घटो न भवति' इत्येवमकारः इति वाच्यम् ।

एकस्यैव उभयप्रतियोगिकत्वेन धर्मात्यन्ताभावत्वभाने 'घटत्वं नास्ति' इत्याकारक[1] धर्म्यन्योन्याभावत्वभाने च 'घटो न भवति' इत्याकारवैचित्र्योपपत्तेः ।

एवं च — अत्यन्ताभावत्वज्ञाने घटत्वत्वावच्छिन्नघटत्वज्ञानमुपयुज्यते । धर्म्यन्योन्याभावज्ञाने च घटत्वावच्छिन्नघटज्ञानं[2] उपयुज्यते ; इत्यादिसर्वसामञ्जस्यम् इति निरस्तम् ।

एवं सति घटान्योन्याभावेनैव घटत्वात्यन्ताभावबुद्ध्यन्यथासिद्धौ, धर्मात्यन्ताभाव एव न स्यात् । सर्वत्र तद्वदन्योन्याभावेनैव तदत्यन्ताभाव[3]बुद्ध्यन्यथासिद्धेः, अत्यन्ताभाव एव लुप्येत च ।[4]

## ६२. अत्यन्ताभावादिवत् अन्योन्याभावस्यापि पृथक्सिद्धिनिगमेन तस्यैव भेदरूपत्वाशङ्कानिगमनम्

यदि च—'भविष्यति' 'ध्वस्तः' 'नास्ति' इत्यादिविलक्षणप्रतीतेः विषयत्रयसिद्धिः, तर्हि 'नास्ति' 'न भवति' इति प्रतीत्योरपि वैलक्षण्यात् अन्योन्याभावोऽपि पृथगेष्टव्यः ।

एवं अन्योन्याभावसिद्धौ अखण्डोपाधिः अन्योन्याभावत्वमेव तल्लक्षणम् । प्रतीतिविशेषश्च तत्परिचायकः इति न लक्षणाक्षे-

---

[1] इत्याकारकः (क) [2] घटत्वज्ञानं (क) [3] घटत्वात्यन्ताभाव (क)
[4] 'च' इति नास्ति (ख)

पावकाशः । अत्यन्ताभावत्व—प्रागभावत्व—ध्वंसत्वान्यपि एवं अतिरिक्तान्येवेति । तस्मात् अन्योन्याभाव एव भेदोऽस्तु—इति चेत् ।

६३. अन्योन्याभावस्य भेदरूपत्वखण्डनारम्भः

(तत्र तस्य व्याप्यवृत्तित्वोपपादनम्)—

अत्रोच्यते "मूले वृक्षः कपिसंयोगवान् शाखायां न" इति अबाधित[1] प्रतीतेः, संयोगवदन्योन्याभावोऽपि शाखावच्छेदेन अङ्गीकर्तव्यः । न च तत्र संयोगात्यन्ताभाव एव विषयः इति वाच्यम् ।[2] बाधकाभावात्, 'संयोगो नास्ति' 'संयोगवान् न भवति' इति प्रतीत्योर्वैलक्षण्येन त्वदुक्तरीत्यैव अन्यथासिद्धेः वक्तुमशक्यत्वात् । किञ्च 'संयोगवान् न भवति' इति शब्दस्य अन्योन्याभावार्थकस्य अप्रमाणत्वापत्तिः । न चेष्टापत्तिः । बाधकादर्शनात्, इष्टापत्तेर्वक्तुमशक्यत्वात् ।[3] संयोगवदन्योन्या[4]भावेनैव संयोगात्यन्ताभावबुद्ध्यन्यथासिद्धौ, तद्वति न संयोगात्यन्ताभावः इति वैपरीत्यस्य दुरुद्धरत्वाच्च ।

६४. संयोगस्याव्याप्यवृत्तित्वसाधनेन तस्य अन्योन्याभाववैलक्षण्योपपादनम्

न च संयोगस्य व्याप्यवृत्तित्वात् न तद्वदन्योन्याभावः तद्वतीति

---

[1] नेत्यबाधित (ख) [2] 'इति वाच्यम्' इति नास्ति (ख) [3] अप्रमाणत्वापत्तिः, बाधकाभावात्, संयोगो नास्ति संयोगवान् न भवति इति प्रतीत्योर्वैलक्षण्येन त्वदुक्तरीत्यैव अन्यथासिद्धेर्वक्तुमशक्यत्वात् । किञ्च संयोगवान् न भवतीति शब्दस्य च अन्योन्याभावार्थकस्य अप्रमाणत्वापत्तिः । बाधकाभावाच्च इष्टापत्तेः कर्तुमशक्यत्वात् (क) [4] संयोगान्योन्या (क)

वाच्यम् । "मूले कपिसंयोगः, शाखायां न" इति अबाधितानुभवात् ।[1]

न च तत्र अवयवस्यैव संयोगः, नावयविनः, इति वाच्यम् । "कपिवृक्षौ संयुक्तौ" इति अवयविसंयोगप्रत्यक्षस्य सर्वसिद्धत्वात् । अवयवसंयोगपक्षे, मध्ये विश्रान्त्यसम्भवेन परमाणुपर्यन्तधावने संयोगस्य अप्रत्यक्षत्वापत्तेः ।[2] कथंचित् आकाशादिसंयोगस्य घटादौ व्याप्यवृत्तित्वसम्भवेऽपि[3], घटपटादिपरस्परसंयोगस्य अव्याप्यवृत्तित्वस्य प्रत्यक्षसिद्धस्य अपह्नोतुमशक्यत्वात् । किञ्च समवायसम्बन्धेन पटस्याप्यव्याप्य[4]वृत्तित्वमनुभूयते । 'दशावाच्छेदेन न पटवन्तः[5] तन्तवः' इति प्रतीतेः सर्वसिद्धत्वात्[6] । दशावच्छेदेन तद्वदन्योन्याभावः तन्तुषु दुरपह्नवो हि ।[7]

६५. अन्योन्याभावस्यापि अव्याप्यवृत्तित्वपक्षोपपादनेन तस्य भेदरूपत्वानुपपत्तिदृढीकरणम्

वस्तुतस्तु–चित्ररूपं नानारूपसमूह एव, नातिरिक्तम् इति स्थितिः । नीलादीनां अव्याप्यवृत्तित्वात् । "तस्मिन्[8] प्रदेशे नीलो घटः, नास्मिन् प्रदेशे" इति नीलाद्यन्योन्याभावोऽपि अव्याप्यवृत्तिरेव ।[9] एवं स्थिते—अन्योन्याभावस्य भेदत्वे मूलशाखाद्यवच्छेदेन वृक्षस्य भिन्नत्वापत्तिः ।

---

[1] संयोगस्य व्याप्यवृत्तित्वासम्भवात—इति शेषः । [2] संयोगाधारस्य परमाणोः अतीन्द्रियत्वादिति भावः । त्वापत्तिः (ख) [3] अव्याप्यवृत्तित्वासम्भवेऽपि (ख) [4] पटस्याव्याप्य (क) [5] सर्वसिद्धत्वात् इति नास्ति (क) [6] पटावच्छेदेन पटसमवायवन्तः (क) [7] हि इति नास्ति (ख) [8] अस्मिन् (ख) [9] एव इति नास्ति (ख)

न चेष्टापत्तिः । "इमौ संयोगतदभावावच्छिन्नौ द्वौ" इति प्रत्ययापत्तेः, 'घटपटौ द्वौ' इति प्रत्ययवत् ।

एवं "मूलावच्छिन्नात् शाखावच्छिन्नो भिन्नः" 'पृथक्' इति प्रत्ययापत्तिः । उक्तप्रत्ययानां भेदनिबन्धनत्वात् ।

## ६६. अन्योन्याभावविशेषस्यापि भेदरूपत्वाभावोपपादनम्

ननु प्रतियोगितावच्छेदकसमानाधिकरणा[1]न्योन्याभावो न भेदः । नाप्यन्योन्याभावमात्रम् । संयोग्यन्योन्याभावादयश्च प्रतियोगितावच्छेदकसमानाधिकरणाः इति नोक्तदोषः इति चेत् न । संयोग्यन्योन्याभावस्यापि प्रतियोगितावच्छेदकासमानाधिकरणत्वात् । न हि मूलावच्छिन्नाग्रावच्छिन्नयोः अन्योन्याभावभेदपक्षे एकत्वं सम्भवति । घटपटयोरिव अन्योन्याभावस्य तद्विरोत्वात् ।

## ६७. प्रतियोगितावच्छेदकसामानाधिकरण्यपरिष्करणेन उक्तार्थदृढीकरणम्

प्रतियोगितावच्छेदकासमानाधिकरणत्वं हि प्रतियोगितावच्छेदकसमानाधिकरणभिन्नत्वम् । प्रतियोगितावच्छेदकसमानाधिकरणत्वाभाववत्वं वा ।[2] उभयथाऽपि शाखावच्छेदेन भेदबुद्धेराववश्यकत्वात्, अन्योन्याभावोऽपि[3] तादृशः इति, भेदबुद्ध्यापत्तिः ।[4] "शाखावच्छेदेन संयोग्यन्योन्याभावः संयोग[5]समानाधिकरणः" इति अबाधितप्रतीतेः ।

---

[1] वच्छेदकव्यधिकरणा (क) [2] समानाधिकरणाभावत्वं वा (क)
[3] शाखावच्छेदेनान्योन्याभावोऽपि (क) [4] भेद एव बुद्ध्यापत्तिः (क)
[5] भावः न संयोग (क)

यदवच्छेदेन प्रतियोगितावच्छेदकासमानाधिकरणत्वं तदवच्छेदेन भेदबुद्धेरावश्यकत्वात् । अन्यथा गुणादावपि भेदबुद्धिं न जनयेत् ।

न च प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणत्वाच्छेदेन अन्योन्याभावबुद्धिः, तादृशबुद्धिजनिका, गुणादौ संयोग्यन्योन्याभावस्तथा, न तु संयोगिनि वृक्षे शाखावच्छेदेनेति उभयसामञ्जस्यमिति वाच्यम् ।

अन्योन्याभावभेदपक्षे शाखावच्छिन्नस्य संयोगिभिन्नतया प्रतियोगितावच्छेदकाधिकरणत्वस्यैव शाखावच्छिन्नत्वस्यापि शाखावच्छिन्नान्योन्याभावे सत्त्वात् ।[1]

एतेन प्रतियोगितावच्छेदकासामानाधि[2]करण्याभावः प्रतियोगितावच्छेदकसामानाधिकरण्यम् इत्यपि प्रत्युक्तम् । शाखावच्छेदेन संयोग्यन्यो[3]न्याभावस्य प्रतियोगितावच्छेदकैकाधिकरण्याभावात् । प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणावच्छेदेन तथात्वस्य विवक्षितत्वे उक्तदोषानुद्धारात् इति ।[4]

६८. भेदस्य अन्योन्याभावातिरिक्तस्वरूपत्वे उक्तसर्वदोषनिवारणोपपादनम्

अन्योन्याभावातिरिक्तभेदपक्षे हि उक्तविवक्षया अतिप्रसङ्गनिरासः स्यात् ।[5]

"वृक्षस्य यः मूले कपिसंयोगी, स एव शाखायां तदभाववान्"

---

[1] प्रतियोगितावच्छेदकाधिकरणभिन्नत्वस्यापि शाखावच्छेदेन सत्त्वात् शाखावच्छिन्नान्योन्याभावस्यापि सत्त्वमिति भावः स्यात् । [2] वच्छेदकैकाधि (क) [3] प्रतियोग्यन्यो (क) [4] 'इति' इति नास्ति (ख) [5] निरसात् (ख)

इति अबाधिताभेदप्रतीत्या केनापि प्रकारेण तद्भिन्नत्वाभावात् । प्रतियोगितावच्छेदकाधिकरणभिन्नाधिकरणवृत्तित्वं प्रतियोगितावच्छेदकासमानाधिकरणत्वम् इत्यस्य निर्दोषत्वात् ।

अन्योन्याभावभेदपक्षे च[1] शाखावच्छेदेन संयोग्यन्योन्याभावमादाय प्रागुक्तपृथक्त्वादिबुद्धिः दुर्वारैव ।[2]

तस्मात् नान्योन्याभावो भेदः ।

## ६९. एवं अत्यन्ताभावस्यापि भेदरूपत्वानुपपत्तिः

[3]नाप्यत्यन्ताभावो भेदः इति द्वितीयः पक्षः । तत्रापि धर्मात्यन्ताभावः धर्मिभेदः इति हि वाच्यम् । तदत्यन्ताभावस्य तद्भेदत्वे स्वस्मिन्नपि स्वात्यन्ताभावसत्त्वेन[4] स्वभेदबुद्ध्यापत्तिः । एवं च संयोग्यत्यन्ताभावस्य[5] शाखावच्छेदेन वृक्षे सत्त्वात् तद्भेदबुद्ध्यापत्तिरिति अन्योन्याभावपक्षोक्तदोषानतिवृत्तिः ।[6]

तस्मात् अत्यन्ताभावोऽपि न भेदः ।

## ७०. भेदस्य अतिरिक्तपदार्थान्तरत्वपूर्वपक्षः

ननु "इदमस्मात् भिन्नम्" इति अबाधितप्रतीत्या भेदः पदार्थान्तरमेव । क्लृप्तान्तर्भावासम्भवात् ।

तथाहि—न द्रव्यगुणकर्माणि, गुणादावपि सत्त्वात् । नापि सामान्यम्, सप्रतियोगिकत्वात्, सामान्यादावपि सत्त्वाच्च ।

---

[1] च इति नास्ति (ख) [2] दुर्वारा (ख) [3] पूर्वं अभावत्वेऽपि किमन्योन्याभावः ? उतात्यन्ताभावः ? इति कृते विकल्पे प्रथमं निरस्य इदानीं द्वितीयं निरस्यति नापीति । [4] न हि घटे घटो वर्तते इति । [5] स्वस्मिन्नपि स्वात्यन्ताभावस्य (ख) [6] दोषानिवृत्तिः (ख)

नापि विशेषसमवायौ, तयोरपि वृत्तेः, अभावसाधारण्याच्च ।[1] नाप्यभावः, तत्रापि न प्रागभावप्रध्वंसाभावौ, आकाशादेः भेदाभावप्रसङ्गात् ।[2] नाप्यत्यन्ताभावान्योन्याभावौ, उक्तदोषादेव । अत एव न स्वरूपमपि । तथा च[3] पदार्थान्तरमेव । इति चेत् —

### ७१. भेदस्य अतिरिक्तपदार्थत्वखण्डनारम्भः

अत्रोच्यते—स किं भेदः यत्र भेदबुद्धिं जनयति, तत्र सम्बन्धः वा भेदबुद्धिं जनयेत् ? असम्बद्धो वा ? आद्ये सोऽपि[4] सम्बन्धः सम्बद्धो वा नियामकः ? असम्बद्धो वा ? आद्ये सोऽपि[5] सम्बन्धः सम्बद्ध एव नियामकः इति सम्बन्धानवस्था ? द्वितीये[6] प्रतियोगिन्यपि भेदबुद्धिं जनयेत्, असम्बन्धाविशेषात् ।

### ७२. स्वरूपसम्बन्धस्य नियामकत्वेन उक्तदोषपरिहाराशङ्कानिरासः

स्वरूपसम्बन्धस्य नियामकत्वात् नानवस्थाऽतिप्रसङ्गौ इति चेत् —न । स्वरूपसम्बन्धस्यैव[7] निर्वक्तुमशक्यत्वात् ।

सम्बन्धान्तरमन्तरेण विशिष्टप्रत्ययजनकत्वं स्वरूपसम्बन्धत्वम्— इति चेत् न । विशिष्टप्रत्ययत्वं नाम[8]—विशेषणविशेष्यभावविषयकप्रत्ययत्वम् । तच्च[9] स्वरूपसम्बन्ध[10] एवेति आत्माश्रयात् । किञ्च[11]—'सम्बन्धान्तरमन्तरेण' इत्यत्र सम्बन्धान्तरासहकृतत्वे

---

[1] अभावसामानाधिकरण्याच्च (क) [2] अकाशादेःप्रागभावप्रध्वंसयोरभावादिति भावः । [3] अतः (ख) [4] सम्बद्धाश्रितः [5] सम्बद्धसम्बन्धाश्रितः । [6] असम्बद्ध एव प्रतीतिं जनयतीति पक्षे । [7] सम्बन्धस्य (ख) [8] 'नाम' इति नास्ति (ख) [9] स च (ख) [10] स्वरूपसम्बन्धघटितमेवेत्यर्थः । [11] 'किञ्च' इति नास्ति (ख)

सति विशिष्टधीजनकत्वं वा ? सम्बन्धान्तरभिन्नत्वे सति विशिष्टधीजनकत्वं वा ? नाद्यः । 'दण्डी' इति[1] विशेषणविशेष्यभावस्थले[2] अव्याप्तेः ।[3] तत्र संयोगस्यापि जनकत्वात् । न द्वितीयः[1] 'संयुक्तो घटः' इत्यत्र संयोगस्यैव[4] विशेषणत्वात् । तत्स्वरूपसम्बन्धे अव्याप्तेः ।[5]

एवं 'पटसमवायिनः[6] तन्तवः' इत्यत्र समवायस्य विशेषणत्वात् तत्राप्यव्याप्तिः ।[7] उभयत्रापि[8] सम्बन्धान्तरभिन्नत्वाभावात् ।

## ७३. वस्तुस्वरूपस्यैव स्वरूपसम्बन्धरूपत्वनिराकरणम्

ननु—तत्तद्वस्तुस्वरूपमेव तत्तद्विलक्षणप्रतीतिनियामकम् इति—अयमेव स्वरूपसम्बन्धपदार्थः[9] इति चेत्—न । एकस्य वस्तुस्वरूपस्य अनेकं प्रति[10] विलक्षण[11]प्रतीतिनियामकत्वस्य वक्तुमशक्यत्वात् । एकस्यैव[12] अवि[13]लक्षणानेकप्रत्ययनियामकत्वे विषयैक्यापत्तेः, प्रत्ययमात्रपरिशेषापत्तेश्च[14] ।

## ७४. प्रकारान्तराश्रयणे भेदप्रतीत्यनुपपत्त्युपपादनम्

ननु—अस्तु प्रत्ययबलात् सम्बन्धस्यापि सम्बन्धान्तरम्, एवं[15] भेदस्यापि भेदान्तरम् । न चैवं अनवस्था दोषः । प्रामाणिकत्वात्[16]

---

[1] इत्यत्र (क) [2] भावे (ख) [3] अतिव्याप्तिः (ख) [4] संयोगस्य (ख) [5] अव्याप्तिः (ख) [6] समवायवन्तः (क) [7] तत्राव्याप्तिः (क) [8] उभयत्र(ख) [9] शब्दार्थः (क) [10] अनेकान् ग्रहीतॄन् प्रतीत्यर्थः [11] अनेकविलक्षण (क) [12] एकस्य (ख) [13] वि (ख) [14] तथा च विज्ञानवादस्यैवावतारः इति भावः । [15] एवं इति नास्ति (ख) [16] प्रत्यक्षादिप्रमाणसिद्धत्वे तद्विरोधेन बौद्धिकदोषचिन्तायाः असाधुत्वादिति भावः । 'वस्तुप्रामाणिकत्वात्' (क)

प्रतीत्यनुपपत्तिश्च नास्ति,[1] सम्बन्धादेः ज्ञानमन्तरेण[2] भेदज्ञान-स्वीकारात् इति चेत्— अस्तु,[3] तावद्विशिष्य निर्वक्तुमशक्यानन्तपदार्थस्वीकारः — दुष्कृतपरिपाकलब्धाद्वैतप्रद्वेषमात्रात्[4] । [5]तथापि भेदप्रतीतिः कथमुपपादनीया ?

भिन्नत्वेनप्रतीतप्रतियोगिको वा भेदः प्रतीयते ? स्वरूपवत् अभिन्न[6] प्रतियोगिको वा ? न तावदाद्यः, अन्योन्याश्रयात् । न द्वितीयः । 'अत्र भेदः स्वरूपेण वर्तते, अत्र[7] न' इत्यत्र प्रमाणाभावात् ।

यत्र भेदप्रत्ययः तत्र वर्तत [8]एवेति चेत्— घटशरावदिषु[9] जले चन्द्रभेदप्रतीतेः, तत्रापि तत्सत्त्वापत्तेः ।[10]

न च—तत्र[11] औपाधिको भेदप्रत्ययः न वास्तवः, उपाधिनिवृत्तौ तन्निवृत्तिदर्शनात् घटादौ न तथा, उपाधेरभावात् — इति वाच्यम् । घटादावपि[12] अविद्यारूपोपाधेः सत्त्वात् ।

## ७५. स्वमते भेदव्यवहार–भेदमिथ्यात्वयोः उपपादनप्रकारः

एकस्मिन्नेव ब्रह्मणि अविद्यावशात् विविधनानाप्रपञ्चभेदव्यवहारः इत्यङ्गीकाराच्च, न वयं भेदमेवापलापयामः ।[13] किन्तु तस्य सत्यत्वम् । घटादिवत् तद्भेदस्यापि चन्द्रभेदवत् अङ्गीकारात् ।

---

[1] प्रतीत्युपपत्तेश्च (क) [2] मन्तरेणापि (क) [3] अस्तु वा (क)
[4] लब्धत्वस्य प्रद्वेषे अन्वयः । तथा च दुष्कृतपरिपाकलब्धः यः अद्वैतप्रद्वेषः इति फलितम् । [5] प्रकृते तावताऽपि न निस्तारः इत्याह—तथापीति ।
[6] स्वरूपसद्भिन्न (क) [7] अन्यत्र (ख) [8] एव इति नास्ति (क) [9] वर्तमाने इति शेषः [10] चन्द्रेऽपि चन्द्रभेदसत्त्वापत्तेः इत्यर्थः । [11] चन्द्रभेददर्शनस्थले इत्यर्थः । [12] अपि इति नास्ति (ख) [13] अपलपामः इति यावत ।

तथा च श्रुतिः —

"यत्र हि द्वैतमिव भवति, तदितर इतरं पश्यति[1] यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्येत्[2]।" इत्यादिः। अत्र इवशब्देन मिथ्यात्वं हि सूचयति श्रुतिः।

## ७६. भेदप्रत्यक्षस्य श्रुत्या बाधोपपादनम्

ननु — भेदग्राहिप्रत्यंक्षस्य अभेदग्राहिश्रुत्या कथं बाधः? वैपरीत्यस्यापि सुवचत्वात् इति चेत् — न। उपक्रमादिभिः गृहीततात्पर्यकस्य वेदस्य स्वार्थे अप्रामाण्यस्य क्वापि अदृष्टचरत्वात्[3] बाधो न कल्प्यते। दृष्टव्यभिचारित्वात्[4] प्रत्यक्षस्यैव तेन बाधः कल्प्यते इति विनिगमकसत्त्वात्।

## ७७. उपजीव्यबाधानुपपत्तिशङ्कानिराकरणम्

ननु — वर्णपदादिप्रत्यक्षस्य शब्दप्रमाणोपजीव्यत्वात्[5] उपजीव्य-

---

[1] पश्यतीति (क) [2] अत्रेदं श्रीशाङ्करं भाष्यम् — यत्र यस्मिन्नविद्याकल्पिते कार्यकारणसङ्घातोपाधिजनिते विशेषात्मन्यखिलाभावे हि यस्मात् द्वैतमिव परमार्थतोऽद्वैते ब्रह्मणि द्वैतमिव भिन्नवस्त्वन्तरमात्मनः उपलक्ष्यते तत् तत्र यस्मात् द्वैतमिव तस्मादेव इतरोऽसौ परमात्मनः खिल्यभूत आत्मा परमार्थचन्द्रादेरिव उदकचन्द्रादिप्रतिबिम्बः इतरः द्रष्टा इतरं द्रष्टव्यं रूपादिकं पश्यति। यत्र वै अस्य ब्रह्मविदः सर्वं नामरूपाद्यात्मन्येव प्रविलापितं आत्मैव संवृत्तं, यत्रैवमात्मैवाभूत् तत् तत्र केन कारणेन कं द्रष्टव्यं कः पश्येत्। केन कमिति क्षेपार्थं वचनम्। प्रकारान्तरानुपपत्तिप्रदर्शनार्थं, केनचिदपि प्रकारेण क्रियाकरणादिकारकानुपपत्तेः। केनचित् किञ्चित् कश्चित् कथंचित न पश्येदेवेत्यर्थः। (बृ.आ.उ.४-४) [3] अदृष्टचारित्वात् (क) [4] शुक्तिरजतादि प्रत्यक्षस्थले इति शेषः। [5] जीवित्वात् (ख)

बाधो न युक्तः इति चेत्—न । वाक्यार्थे ब्रह्मणि प्रत्यक्षस्य अनुपजीव्यत्वात् । वर्णपदादिमात्रत्वेन शाब्दबोधं प्रति अहेतुत्वात ।[1]

वर्णपदादिभ्रमेणापि शाब्दबोधदर्शनात् । 'अश्वमानय' इत्युक्ते 'अस्वमानय' इति श्रुतवतः अतात्पर्यविषयस्यापि निस्स्वानयनस्य[2] प्रतीतेः । 'अश्वमानय' इत्युच्चारणीये[3] करणापाटवात्, 'अस्वमानय' इत्युच्चारितेऽपि[4] इन्द्रियापाटवात एवं रूपेण 'अश्व[5]मानय' इत्येवोक्तमिति ज्ञातवतः[6] तात्पर्यविषयाश्वानयन प्रमित्युत्पत्तेश्च ।

अतः शाब्दज्ञाने प्रत्यक्षस्य उपजीव्यत्वेऽपि, तत्प्रमात्वस्य अनुपजीव्यत्वात्, तद्बाधेऽपि नोपजीव्यबाधनप्रसङ्गः ।[7] अन्यथा 'स्थाणुर्न वा' इति संशयानन्तरं 'स्थाणुरेव' निश्चये[8] विशेषणज्ञानत्वेन संशयस्य उपजीव्यत्वात् कोट्यन्तरबाधकत्वं न स्यात् । यदि च स्थाणुत्वांशे उपजीव्यत्वेऽपि[9] कोट्यन्तरे तदनुपजीव्यत्वात बाधकत्वं निर्बाधं,[10] तदा प्रकृतेऽपि तुल्यमेव ।[11]

## ७८. दृष्टान्तोपपादनेन प्रत्यक्षस्य श्रुतिबाधकत्वाभावदृढीकरणम्

एवं 'इदं रजतम्' इति ज्ञानस्यापि 'नेदं रजतं' इति ज्ञानेन[12] प्रतियोगिज्ञानत्वेन अपेक्षणात् बाधो न स्यात् ।

---

[1] त्वाच्च (क) [2] स्वत्वशून्यपरकीयवस्त्वानयनस्येत्यर्थः । 'अस्वानयनस्य (क) [3] इत्युच्चार्यमाणे (क) [4] अपि इति नास्ति (ख) [5] पाटवात् अश्व (ख) [6] मिति भ्राम्यतः (ख) [7] बाधः (ख) [8] निश्चयेन (क) [9] स्थाणुत्वांशे तदुपजीवित्वे (क) [10] निर्बाधं इति नास्ति (ख) [11] किं बहुना ? ज्वालैक्यप्रत्यक्षस्य प्रत्यक्षोपजीव्येन अनुमानेन बाधः सर्वसम्प्रतिपन्न एवेत्यपि अत्र योजनीयम् । 'एव' इति नास्ति (ख) [12] ज्ञाने (क)

यदि च [1]तत्प्रामाण्यस्य अनुपजीव्यत्वात् तदबाधकत्वम्[2], तदा प्रकृतेऽपि तुल्यम् ।

न च जनकज्ञानप्रामाण्यं जन्यज्ञानप्रामाण्यो[3]पयोगि भवेत् ।[4] व्यभिचारिलिङ्गजन्याया: अप्यनुमितेः विषयाबाधेन प्रमात्व-दर्शनात् । प्रतिबिम्बेन बिम्बप्रमानुमितेश्च ।

तस्मात् नोपजीव्यतया प्रत्यक्षस्य श्रुतिबाधकत्वम् ।

## ७९. असत्यात्सत्यसिद्ध्युपपादनेन, असत्याद्वेदात् सत्यज्ञानोत्पत्त्यनुपपत्तिशङ्कानिवारणम्

यत्तु—असत्यात् सत्योत्पत्तिर्न सम्भवतीति कथं असत्यात् वेदात्[5] सत्यज्ञानो[6]त्पत्तिः ? इति; तत्र वदामः—

किमसत्यादिति—अनुपाख्यात् व्यावहारिकात् ब्रह्मभिन्नात्[7] ब्रह्म-ज्ञानबाध्यात्[8] अपारमार्थिकाद्वा सत्यस्य पारमार्थिकस्य[9] उत्पत्तिर्न सम्भवतीत्यर्थः ? किं वा अपारमार्थिकात् पारमार्थिकविषयज्ञानं न सम्भवतीत्यर्थः ?

तत्र आद्ये—'अनुपाख्यात्' इति अनुक्तोपालम्भः । प्रपञ्चस्य अनुपाख्यत्वानङ्गीकारात् । व्यावहारिकादि[10]पक्षचतुष्टये सिद्ध-साधनम् । उत्पन्नस्य ब्रह्मव्यतिरिक्तमात्रस्य पारमार्थिकत्वानङ्गी-कारात् ।

न द्वितीयः । जनक[11]पारमार्थिकत्वस्य जन्यज्ञानविषयपारमार्थि-

---

[1] यत्प्रा (क) [2] तद्बाधकत्वात् (क) [3] न च जनकज्ञानप्रामाण्यो (क) [4] भवेत् इति नास्ति (ख) [5] भेदात् (ख) [6] सत्यब्रह्मज्ञानो (क) [8] ब्रह्माभि-न्नात् (क) [8] साध्यात् (ख) [9] सत्यपारमार्थिकस्य (क) [10] आदि इति नास्ति (क) पक्षचतुष्टयं च अनुपदमेव पूर्वं उक्तम् । [11] जनकस्य ज्ञानादेरित्यर्थः ।

कत्वे अप्रयोजकत्वात् ।

यथा व्यावहारिकप्रमाणाबाध्यात् चक्षुरादेः जायमानं शुक्तिरजतादिज्ञानं व्यावहारिकप्रमाणाबाध्यविषयम्, तथा ब्रह्मज्ञानाबाध्यजन्यस्य ज्ञानस्य तदबाध्यविषयकत्वे निरोधगन्धाभावात्। अन्यथा नित्यजन्यस्य कथं अनित्यविषयकत्वम्? अनित्यजन्यस्य कथं नित्यविषयकत्वम्? गुणस्य कथं द्रव्यविषयकत्वम्? अनित्यज्ञानस्य वा[1] कथं नित्यविषयकत्वम्? इत्यादिदूषणानि[2] प्रसज्येरन् ।

"लोकसामग्रीमर्यादया जायमानज्ञानस्य विषयबाधाभावे प्रामाण्यम्" इति हि[3] स्थितिः । न हि वेदान्तजन्यस्य अद्वितीयात्मज्ञानस्य विषये बाधकप्रत्ययः ।[4] यदि तत् सम्भवति, तर्हि तदेव वाच्यम् । यदि न सम्भवति, तर्हि[5] "कथम् असत्यात् सत्योत्पत्तिः?" इत्यादि सर्वं निरर्थकमेव वचः ।[6]

## ८०. भ्रमस्थलेऽपि विषयस्य पारमार्थ्यशङ्कानिवारणम्

यत्तु—शुक्तिरजतज्ञानस्यापि[7] विषयः पारमार्थिक एव । पुरोवर्तिरजतत्वतत्समवायानां अबाध्यत्वात्— इति, तन्न । रजतत्वस्य, पुरोवर्तिनि रजतत्वनिरूपितविशेष्यत्वस्य च अपारमार्थिकत्वात् ।

न च विशेषणविशेष्यभावस्य तत्स्वरूपानतिरेकात्, स्वरूपस्य[8] च पारमार्थिकत्वात् नैवमिति वाच्यम् । तथा सति भ्रमप्रमा-

---

[1] वा इति नास्ति (क) [2] इत्यादिनित्यविषयदूषणानि (क) [3] इतीह (क) [4] बाधकं पर्यायः (ख) (सद्भावः–ख) ? [5] तर्हि इति नास्ति (ख) [6] इति निरर्थकं वचः (ख) [7] ज्ञानस्य (ख) [8] तत्स्वरूपस्य (क)

विभाग एव न स्यात् । भ्रमे भासमानानां सर्वेषां याथार्थ्ये कथं वा भ्रमत्वम्, कथं वा बाधः ?

## ८१. प्रकारान्तरेण भ्रमप्रमयोः वैलक्षण्यस्य निरासः

न च व्यधिकरणप्रकारकत्वतदभावाभ्यां वैलक्षण्यम् । वैयधिकरण्यस्यापि स्वरूपमात्रपर्यवसायित्वेन अविशेषकत्वात् । तदभाववति तत्प्रकारकत्वं हि तत् । तदभावः अधिकरणं चेति द्वयं स्वरूपमेव ।

न च—आरोपितः[1] शशविषाणकल्पः इति वाच्यम् । तर्हि — रजते 'नेदं रजतम्' इति ज्ञानस्य असत्यविषयत्वं त्वयैवाङ्गीकृतम् स्यात् ।[2] एतेन सर्वे भ्रमाः व्याख्याताः ।

## ८२. भ्रमस्थले स्वमतोपपादनम्

वस्तुतस्तु — ख्यातिबाधान्यथानुपपत्त्या[3] अनिर्वचनीयं रजतं तत्रोत्पद्यते इति अवश्यमङ्गीकर्तव्यमिति शुक्तौ रजतज्ञानविषयस्य पारमार्थिकत्वमिति रिक्तं वचः ।

## ८३. असत्यात् सत्योत्पत्त्यङ्गीकारविषये दूषणनिराकरणम्, प्रकृते च सत्यादेव सत्यसिद्ध्युपपादनं च

---

[1] स्वरूपमेव आधाराधेयभावः, ततश्च सत्यरजतेऽपि रजतज्ञानं भ्रमः स्यात् । रजतरजतत्वाभावयोः सत्त्वेन आधाराधेयभावसम्भवात् । न च रजतत्वाभावरजतयोः आधाराधेयभावः परस्परनिरूपितः (क) अत्र आरोपितः इत्यस्य 'शुक्तिरजतादिः' इत्यादिः । [2] पूर्वं शुक्तिरजतज्ञानस्य पारमार्थिकविषयत्वमुक्तं तेन । अधुना आरोपितस्य शशविषाणकल्पत्वे आश्रीयमाणे, शुक्तिरजतज्ञानस्य असद्विषयकत्वं त्वयैव अङ्गीकृतं स्यात् । यथा च स्वोक्तिविरोधः दुर्वारः इति भावः । [3] ख्यातिबाधयोः अन्यथानुपपत्त्या इत्यर्थः ।

यत्तु प्रतिबिम्बादेरसत्यस्य [1]सत्यबिम्बज्ञानजनकत्वदर्शनात् असत्यादपि सत्योत्पत्तिरुपपन्नेत्यत्र दूषणं कृतम्— तत्रापि प्रतिबिम्बज्ञानस्य सत्यस्यैव बिम्बज्ञानजनकत्वं, न त्वसत्यस्य प्रतिबिम्बस्य" इति, तदपि मन्दम् । प्रकृतेऽपि सत्यस्य [2]पदावलिज्ञानस्यैव सत्यात्मविषयकवाक्यार्थविषयकज्ञानजनकत्वात् ।

न च भवन्मते—अन्तःकरणवृत्तिरूपमेव ज्ञानं, तच्च असत्यमेवेति वाच्यम् । तदवच्छिन्नचैतन्यस्यैव ज्ञानत्वात् । वृत्तिमात्रस्य जडत्वेन अर्थप्रकाशकत्वानुपपत्तेः । 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्या आत्मनः ज्ञानत्वसिद्धेश्च ।

न च निर्धर्मके ब्रह्मणि कथं ज्ञानत्वं धर्मः ? इति वाच्यम् । धर्मिस्वरूपस्यैव ज्ञानत्वस्य [3]व्यवहारदशायां भेदेन भानोपपत्तेः । तदुक्तं टीकायाम्—[4]

"आनन्दः विषयानुभवः नित्यत्वम् इति सन्ति धर्माः । ते अपृथक्त्वेऽपि चैतन्यात् पृथगिवावभासन्ते इत्यदोषः" इति । अतः विषयानुभवस्य ब्रह्मस्वरूपत्वात्, पारमार्थिकादेव ज्ञानात् सर्वकार्योत्पत्तिरिति सन्तोष्टव्यमायुष्मता ।

## ८४. वेदस्य आविद्यकत्वनिमित्ताप्रामाण्यशङ्कानिरासः

न च—अविद्यारूपदोषजन्यत्वात् अद्वैतवाक्यजन्यज्ञानस्य अप्रमात्वम् ।[5] लौकिकवाक्यजन्यज्ञानवत् तत्रापि मूलाविद्यायाः प्रमात्वाप्रमात्वयोः औदासीन्यात् । शाब्दप्रमायां[6] सर्वत्र भ्रम-

---

[1] 'सत्य' इति नास्ति (ख) [2] पदावली (क) [3] ज्ञानत्वव्यव (क) [4] तदुक्तं टीकायां इति नास्ति (ख) [5] अप्रमात्वम् (क) [6] शाब्दज्ञाने इति यावत् ।

प्रमादादेरेव दोषत्वात् ।[1] तस्य च अपौरुषेये वेदे शङ्कितुं अशक्यत्वात् ।

तस्मात् निर्दोषवेदजन्यं अद्वितीयात्मज्ञानं प्रमैवेति[2] तद्विषयस्य पारमार्थिकत्वं नापह्नोतुं शक्यम् इति ।

## ८५. श्रुतिबोधितसत्यपदार्थस्वरूपनिरूपणम्

ननु सत्त्वस्य घटादिस्वरूपत्वात् जातिस्वरूपत्वाद्वा[3] घटादिग्राहक-प्रत्यक्षेण गृहीतत्वात् तदसत्त्व[4]बोधकश्रुतेः प्रत्यक्षबाधः ।[5] इति चेत्—न । स्वरूपस्य सत्तारूपस्य वा सत्यत्वस्य श्रुत्या अनिरासात् । किन्तु—त्रिकालाबाध्यत्वरूपं सत्यत्वं श्रुत्वा निषिध्यते । न च तादृशं सत्यत्वं प्रत्यक्षगम्यम् । प्रत्यस्य वर्तमानार्थमात्रा ग्राहितया कालत्रयाबाध्यत्वस्य तदगोचरत्वात् ।

## ८६. सर्वत्र शास्त्रप्रत्यक्षयोः विरोधाभावोपपादनम्

वस्तुतः घटपटादीनां भेदं प्रत्यक्षेण गृह्णाति, न तु ब्रह्मप्रपञ्चयोः श्रुत्या च —

" सदेव सोम्येदमग्र आसीत् ।
एकमेवाद्वितीयं ब्रह्म ।"[6]

---

[1] प्रतिबन्धकत्वाहित्यर्थः । प्रमादादेरिव अदोषत्वात् (क) [2] प्रमैव (क) [3] जातिरूपत्वात् (ख) [4] सदसत्यत्व (क) [5] अन्यथा यूपादित्यदि-वाक्यानामपि 'आदित्यो यूपः । यजमानः पशुः' इत्यादीनां स्वार्थे प्रामाण्य-मेव स्यादिति भावः । अत्र 'त्रि' इति नास्ति (क) [6] अस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरयवं विज्ञानं यदवगम्यते सर्व-वेदान्तेभ्य; तत् सत्, एव शब्दोऽवधारणार्थः, इदं जगत् नामरूपक्रियाव-द्विकृतमुपलभ्यते यत् तत्सदेवासीत् । अग्रे जगदुत्पत्तेः प्राक्, इदानीमपि ।

" सर्वं खल्विदं ब्रह्म ।"[1]

" नेह नानाऽस्ति किञ्चन ।"[2]

इत्यादौ ब्रह्मभेदेन[3] प्रपञ्चनिषेधः श्रूयते तत्र भिन्नविषयत्वात् न प्रत्यक्षश्रुत्योः विरोधः ।

८७. प्रकृते भेदस्य प्रत्यक्षत्वासम्भवोपपादनम्

प्रत्यक्षदृष्टकार्यकारणयोरेव[4] भेदवादिमतेऽपि भेदः प्रत्यक्षेण न गृह्यते । दूरे ब्रह्मप्रपञ्चयोः । न हि भेदवादिनाऽपि[5] मृद्घट-योर्भेदः प्रत्यक्षेण गृह्यते । ' मृदो घटो भिन्नः ' ' घटाच्च मृत् भिन्ना ' इति वा, ' तन्तुभ्यः पटो भिन्नः ' ' पटात् तन्तवो भिन्नाः ' इति वा [6]प्रत्यक्षासम्भवात् ।

८८. उपादानोपपादेययोः भेदाभावोपपादनम्

सिद्धान्ते तु[7] उपादानोपादेययोः भेद एव नास्ति ।

---

स्वकार्यपतितमन्यन्नास्तीत्येकमेव, अद्वितीयम्— मृद्व्यतिरेकेण मृदो यथा अन्यघटाद्याकारेण परिणमयितृ कुलालादिनिमित्तकारणं दृष्टं, तथा सद्व्यति-रेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं निषिध्यते अद्वितीयमिति इत्यर्थः ।

[1] सर्वं समस्तं खलु इदं जगत् नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म कारणम् । वृद्धतमत्वात् ब्रह्म इत्यर्थः । [2] अनेन ब्रह्मदर्शनसाधनमुच्यते । मनसैव परमार्थज्ञानसंस्कृतेन आचार्योपदेशपूर्वकं च अनुद्रष्टव्यम् । तत्र च दर्शनविषये ब्रह्मणि न इह नानाऽस्ति किञ्च न, न किञ्चिदपि इत्यर्थः ।

[3] ब्रह्माभेदेन (क) [4] अथ सन्मात्रप्रत्यक्षवादिमतेन आक्षिपति—भेदेत्यादिना ।

[5] वादिनामपि (क) [6] वा प्रत्यक्षव्यतिरेकेण भेदप्रत्यक्षा (क)

[7] सिद्धान्ते च (क)

'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्'[1] इति श्रुतेः, 'तदनन्यत्वमारम्भणशब्दादिभ्यः'[2] इति सूत्राच्च ।

## ८९. जीवब्रह्मभेदस्यापि अप्रत्यक्षत्वम्

जीवब्रह्मणोरपि भेदो न प्रत्यक्षः । धर्मिद्वय प्रत्यक्षव्यतिरेकेण भेदप्रत्यक्षानुपपत्तेः । परमते जीवस्य मनोग्राह्यत्वेऽपि, शुद्ध-चैतन्योपनिषदर्थस्य ब्रह्मणः तदग्राह्यत्वात् ।

---

[1] नैयायिकरीत्या असदेव घटादिकं मृत्पिण्डेनोत्पद्यते, अतश्च उपादानोपादेययोर्भेदात् न मृत्पिण्डे ज्ञाते सर्वमृण्मयानां ज्ञातत्वं सम्भवतीति मन्वानं प्रत्याह—वाचारम्भणमिति । घटत्वादिलक्षणो विकारः घटशरावादिनामधेयं च, आरभ्यते आलभ्यते स्पृश्यते इत्यारम्भणम् , कर्मणि ल्युट् । तेनैव मृद्द्रव्येण घटशरावादिलक्षणः विकारः घटशरावादिनामधेयं च स्पृश्यते इत्यर्थः । मृद्द्रव्येण विकारनामधेये कस्मै प्रयोजनाय स्पृश्येत ? इत्यत्राह—वाचेति । वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन नामरूपे स्पृश्येते । मृत्पिण्ड एव नामरूपभाग्भवतीत्यर्थः । कार्यकारणयोरेकद्रव्यत्वे प्रमाणमाह-मृत्तिकेत्येव सत्यमिति । मृन्मयं घटादिकं मृत्तिकेत्येव प्रमाणप्रतिपन्नम् । न तु तद्भिन्नत्वेनेत्यर्थः ।

[2] (ब्रह्मसूत्रम् २-१-१४) भोक्तृभोग्यविभागो न पारमार्थिकः, तत्र हेतुः तदनन्यत्वम् । यस्मात् तयोः कार्यकारणयोः अनन्यत्वमवगम्यते, कार्यं आकाशादिकं बहुप्रपञ्चं जगत् , कारणं परं ब्रह्म ; तस्मात् कारणात् परमार्थतोऽनन्यत्वं व्यतिरेकेणाभावः कार्यस्यावगम्यते, कुतः ? आरम्भण-शब्दादिभ्यः । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय दृष्टान्तापेक्षायां उच्यते—यथा सौम्येकेन इत्यादि । तस्मात् श्रुतियुक्तिभ्यां अनन्यत्वमेवावगम्यते इत्यर्थः ।

'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह ।'[1]
'तं त्वौपनिषदं पुरुषं पृच्छामि ।'[2]
'नावेदविन्मनुते तं बृहन्तम् । सर्वानुभुमात्मानं सम्पराये ।'[3]

इत्यादिश्रुतिभ्यः ।

अन्योन्याभावभेदपक्षेऽपि निर्गुणब्रह्माभेदस्य जीवे आपाद्यमानस्य अधिकरणायोग्यतापादकत्वेन अन्योन्याभावस्यापि[4] अप्रत्यक्षत्वात् । 'यत्तादात्म्यं यत्रापाद्यं अधिकरणस्य अयोग्यतां नापादयति, तदन्योन्याभावः तत्र प्रत्यक्षः' इत्येव पैरः[5] परिभाषितत्वात् । तथा च 'तत्त्वमस्या'दिवाक्यस्य[6] जीवब्रह्माभेदप्रतिपादकस्य न प्रत्यक्षेण विरोधः ।'

---

[1] यस्मात् निर्विकल्पात् यथोक्तलक्षणादद्वयानन्दात् आत्मनः वाचः अभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि, वस्तुसामान्यात् निर्विकल्पे ब्रह्मणि प्रयोक्तृभिः प्रकाशनाय प्रयुज्यमानानि, अप्राप्य अप्रकाश्यैव मनसा सर्वप्रकाशनसमर्थेन विज्ञानेन सहैव निवर्तन्ते, स्वसामर्थ्याद्धीयन्ते इत्यर्थः ।

[2] सः यःकश्चित् तान् शारीरप्रभृतीन् पुरुषान् निश्चयेन गमयित्वा अष्टचतुष्कभेदेन लोकस्थितिमुपपाद्य, पुनः प्राचीदिग्द्वारेण प्रत्यूह्य, स्वात्मनि हृदये अत्यक्रामत् अतिक्रान्तवान्, उपाधिधर्मं हृदयाद्यात्मत्वं स्वेनैवात्मना व्यवस्थितः यः औपनिषदः पुरुषः अशनायादिवर्जितः उपनिषत्स्वेव विज्ञेयः नान्यप्रमाणगम्यः, तं त्वा विद्याभिमानिनं पुरुषं पृच्छामि इत्यर्थः ।

[3] सर्वानुभुं सर्वत्रानुभवरूपेण वर्तमानं सर्वस्य वा अनुभवितारं तं परमात्मानं महानुभावं बृहन्तं महान्तं देवं सम्पराये मरणकाले, अवेदवित् अवेदार्थज्ञः, न मनुते न जानाति इत्यर्थः ।

[4] अपि इति नास्ति (क) [5] पक्षे (ख) [6] तत्त्वमसीतिवाक्यस्य (क)

## ९०. अभेदस्य (अद्वैतस्य) प्रत्यक्षविरुद्धत्वाभाववादनिगमनम्

न च प्रत्यक्षस्य केनचित्[1] वाक्येन बाधः न दृष्टचरः इति वाच्यम् । रज्जुसर्पभ्रमादौ 'नायं सर्पः' इत्याप्तवाक्यात् बाधदर्शनात् ।

तस्मात् अद्वैतश्रुतेः न प्रत्यक्षविरोधः ।

इति भेदनिरासे प्रत्यक्षविरोधपरिहार-
प्रकरणम् ।

— ० —

1. केनचित् इति नास्ति (ख)

## अथ अनुमानविरोधपरिहारप्रकरणम्

९१. **अद्वैतस्य चानुमानविरुद्धत्वनिरसनारम्भः (तत्र अनुमानेन भेद-साधनाशङ्का)—**

ननु—मास्तु प्रत्यक्षविरोधः । अनुमानेन परं[1] विरोधः भवि-ष्यत्येव ।[2]

तथाहि—" जीवः परमात्मप्रतियोगिकपारमार्थिकभेदवान्, ततो विरुद्धधर्माश्रयत्वात् । यो यद्विरुद्धधर्माश्रयः सः ततः परमार्थतो भिद्यते । यथा घटविरुद्धधर्माश्रयः पटः ततो[3] भिन्नः । तथा चायम्, तस्मात् तथा ।" इत्यनुमानमेव जीवब्रह्मभेदे प्रमाणम् । न च अप्रयोजकत्वम् । किञ्चिज्ज्ञत्वसर्वज्ञत्वादिधर्माणां एकत्र असम्भवात्—इति चेत् न ।

९२. **तन्निरासः**

पारमार्थिकभेदसाधने विरुद्धधर्माश्रयत्वहेतोः बिम्बप्रतिबिम्ब-चन्द्रयोः व्यचारात् ।

९३. **हेतुसाध्यदलयोः पारमार्थिकत्वप्रवेशावश्यकत्वविचारः**

न च—पारमार्थिकविरुद्धधर्माश्रयत्वं हेतुः । अन्यतरासिद्धत्वात् । ब्रह्मभिन्नस्य पारमार्थिकत्वानङ्गीकारात् ।

न च—साध्येऽपि पारमार्थिकत्वं न विशेषणम् । तेन चन्द्र-भेदादौ न व्यभिचारः इति वाच्यम् । सिद्धान्तेऽपि[4] जीव-ब्रह्मणाः भेद एव नाङ्गीक्रियते । किन्तु तस्य सत्यत्वम् ।[5]

---

[1] परं इति नास्ति (ख) [2] एव इति नास्ति (ख) [3] ततः घटादित्यर्थः ।
[4] अपि इति नास्ति (क) [5] नाङ्गीक्रियते इति पूर्वेणानुषङ्गः ।

अत एव—

"जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।
अविद्यातच्चितोर्योगः षडस्माकमनादयः ।"[1]

इति सैद्धान्तिकोक्तिः ।[2]

## ९४. उक्तानुमाने दोषान्तरम्, भेदसत्यत्वानुमानदूषणं च

"जीवः परमात्मभिन्नः, आत्मत्वात्, परमात्मवत्" इति सत्प्रतिपक्षितत्वाच्च ।[3] यत्त्व-तत्त्वयोः अननुगमाच्च ।

न च—जीवब्रह्मणाभेदाङ्गीकारे 'स भेदः पारमार्थिकः, वस्तुत्वात्, परमात्मवत्' इति भेदसत्यत्वं अनुमातुं शक्यते इति वाच्यम् । चन्द्रभेदे व्यभिचारात् ।

## ९५. हेतुपरिष्कारेणापि भेदसिद्धिनिरासः

न च—अबाध्यत्वं हेतुविशेषणम् । अन्यतरासिद्धेः । साध्याविशेषाच्च ।

ननु—उभयवादिसिद्धबाध्यभिन्नत्वं हेतुः । न चायमसिद्धः । सिद्धान्ते प्रपञ्चस्य बाध्यत्वाङ्गीकारेऽपि, परैरनङ्गीकारेण उभयसिद्धबाध्यभिन्नत्वस्य असत्त्वात् ।[4] चन्द्रभेदादौ तु उभाभ्यां बाध्यत्वस्वीकारात् न व्यभिचारः इति चेत्—न ।

चन्द्रभेदवत् अपारमार्थिकत्वेनाप्युपपत्तौ, अप्रयोजकत्वात् । उभयसिद्धपारमार्थिकभिन्नत्वेन सत्प्रतिपक्षितत्वाच्च । 'भेदः मिथ्या, भेदत्वात्, चन्द्रभेदवत्' इत्यपि सत्प्रतिपक्षितत्वाच्च । एवं[5]

---

[1] इदमेव अनादिषट्कमिति परिगण्यते । [2] सिद्धान्तोक्तिः (क) [3] सत्प्रतिपक्षत्वाच्च (ख) [4] स्वस्य सत्यत्वात् (क) [5] एवं इति नास्ति (ख)

आत्मत्वस्य उपाधित्वाच्च ।

तस्मात् अनुमानेन[2] न विरोधः ।[3]

इति भेदनिरासे अनुमानविरोधपरिहार-
प्रकरणम् ।

— ० —

[2] अनुमानेन इति नास्ति (ख) अद्वैतस्येति शेषः ।

[3] परमार्थवस्त्ववधारणार्थमुपन्यस्यते (मुण्डके तृतीये प्रथमो मन्त्रः) द्वौ सुपर्णौ शोभनपतनौ सयुजौ सहैव सर्वदा युक्तौ, सखायौ समानख्यातौ समानाभिव्यक्तिकारणौं समानं अविशेषं उपलब्ध्यधिष्ठानतया एकं वृक्षं वृक्षमिव उच्छेदनसामान्यात् शरीरं परिषस्वजाते परिष्वक्तवन्तौ । अयमेव वृक्षः ऊर्ध्वमूलः अश्वत्थः । तयोः परिष्वक्तयोः अन्यः एकः क्षेत्रज्ञः लिङ्गोपाधिः वृक्षमाश्रितः पिप्पलं कर्मनिष्पन्नं सुखदुःखलक्षणं फलं स्वादु अनेकविचित्रवेदनास्वादरूपं अत्ति अक्षयति उपभुङ्क्ते अविवेकतः, अनश्नन्नन्यः इतरः ईश्वरः नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सत्त्वोपाधिः अभिचाकशीति पश्यत्येवकेवलम् । दर्शनमात्रेण हि तस्य प्रेरयितृत्वं राजवत् ।

॥ अथ श्रुतिविरोधपरिहारप्रकरणम् ॥

---

## ९६. अभेदे श्रुतिविरोधाभावनिरूपणम्—तत्र श्रुतिविरोधाशङ्का

ननु —"द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते[1]।
तयोरन्यः पिप्पलं स्वाद्वत्ति
अनश्नन्नन्यो अभिचाकशीति ।"[2]

"अजामेकां लोहितशुक्लकृष्णां
बह्वीं प्रजां जनयन्तीं सरूपाम् ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ।"[3]

इत्यादि श्रुतिविरोधः ।[3] इति चेत्—न ।

---

[1] अस्य मन्त्रस्य विवरणं पूर्वस्मिन् पुटे परमार्थेत्यादिना दर्शितम् ।

[2] अजां अजननशीलां अप्रसवधर्मिणीं प्रकृतिं, एकां सर्वभोक्तृसाधारणीं, लोहितशुक्लकृष्णां रजस्सत्त्वतमसां साम्यावस्थात्मिकां बह्वीं सुरनरतिर्यगादि-भेदभिन्नां प्रजां विकारात्मिकां सरूपां जनयन्तीं उत्पादयन्तीं, एकः कश्चित् अजः अजननशीलः भोगलोलुपबुद्धिः जुषमाणः तद्भोगेन प्रीयमाणः अनुशेते अनुभुङ्क्ते । कर्मवशात् सानुशय इव पुनः तां भुङ्क्ते । अथ अन्यः कश्चिन्मुक्तः एनां अजां भुक्तभोगां भुक्तभोक्तव्यां कर्मक्षयात भोक्तव्यशेषशून्यां तेन प्रयोजनाभावात् जहाति त्यजति—अजः परमात्मीभूतः नित्यः । एवं बन्धहेतोः परमात्मनः उत्पत्तिः, मुक्तात्मनश्च परमात्मनोपसंहारश्चेत्युभयमनेनोक्तम् । [3] अत्र प्रकृतिजीवब्रह्मणां स्पष्टतया परस्परं भेदस्य, विरुद्ध-धर्माणां च प्रतिपादनात् , एतादृशानन्तद्वैतश्रुतिविरोधः इति भावः ।

९७. तत्परिहारः

'द्वासुपर्णा' इत्यस्य—

"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्, अनश्नन्नन्यो अभिचकशीति = अनश्नन्नन्योऽभिपश्यति ज्ञः, तावेतौ सत्त्वक्षेत्रज्ञौ ।"

इति बुद्धिक्षेत्रज्ञपरतया पैंगिरहस्यब्राह्मणे[1]व्याख्यातत्वेन विरोधगन्धानवकाशात् ।[2]

'अजामेकाम्' इत्यत्रापि मुक्तसंसारिभेदप्रतिपादनेन जीवानामेव भेदः प्रतिपाद्यते, न तु जीवपरमात्मनोः इति ।

९८. भेदश्रुतीनां सर्वासामपि अन्यपरत्वप्रतिपादनेन ताभिर्विरोधाभावः

वस्तुतः भेदश्रुतयः सर्वा अपि मानान्तर[3]गोचरभेदप्रतिपादनेन अभेदपरा एवेति[4] न ताभिः विरोधशङ्काऽपि ।

९९. श्रुतीनां भेदतात्पर्यकत्वाभावप्रतिपादनम्

न च ईश्वरप्रतियोगिकभेदस्य जीवे प्रत्यक्षादिगोचरत्वेऽपि, जीवप्रतियोगिकभेदस्य नेश्वरे प्रत्यक्षादिगम्यत्वमिति, मानान्तरागम्यतद्भेदे तात्पर्यमावश्यकमिति वाच्यम् । 'ईश्वरः जीवप्रति-

---

" इत्यादिविरोधात् नाद्वैतसिद्धिः " इति (क)

[1] पैङ्गिरहस्ये (ख) [2] यद्यपि 'गुहां प्रविष्टावात्मनौ' इति द्विवचननिर्देशात् उभयोरात्मत्वं सूत्रोक्तम्। सूत्रे च लक्षणाकल्पनं न न्याय्यम्। अथापि आनन्दमयाधिकरणश्रीशाङ्करभाष्यभामत्योः सूत्रे लक्षणायाः समर्थनात् एवमुक्तिः इति भाव्यम् । [3] सर्वमानान्तर (ख) [4] अभेदप्रतिपादकवाक्यान्तरैकवाक्यतया इति भावः ।

यौगिकभेदवान्, जीवनिष्ठभेदप्रतियोगित्वात्, घटादिवत्' इति तत्सिद्धेः, समानसंवित्संवेद्यतया प्रतियोगित्वादिवत् भेदभाने बाधकाभावाच्च ।

न च—भेदस्य मानान्तरगम्यत्वेऽपि, तस्य त्रिकालाबाध्यत्वरूप-सत्यत्वं न मानान्तर[1]गम्यमिति, भेदश्रुतीनां तत्सत्यत्व एव[2] तात्पर्यमिति वाच्यम् । तथासति अद्वैतश्रुतेः अत्यन्तबाधापत्तेः ।[3] तथा हि—"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्म ।"

"नेह नानाऽस्ति किञ्चन ।"[4]

"स एष नेति नेति ।"[5]

इत्यादिभिर्हि स्पष्टं अद्वैतमेव[6] प्रतिपाद्यते । तत्र 'सदेव' इति वाक्ये—'सृष्टेः प्राक् सदेवासीत्, न त्वसत् कार्यम्'—इति सद्भिन्नं सर्वं निषिध्यते ।

यथा—'अस्मिन् वने चूतवृक्षा एव आसन्' इत्यत्र वृक्षान्तर-निषेधः, तद्वत् । तच्च सत्—एकं नाना वा ? इति विवक्षायां-निर्धारयति—'एकमेवाद्वितीयम्' इति । पदत्रयेणात्र सजा-तीयविजातीयस्वगतभेदनिरासः क्रियते ।

---

[1] समानन्तर (ख) [2] एव इति नास्ति (ख) [3] केवलौपचारिकत्वं स्यादित्यर्थः । सिद्धान्ते तु भेदश्रुतीनां प्रतियोगिसमर्पणार्थत्वेन नौपचारिकत्वं इति भावः । [4] इमौ मन्त्रौ पूर्वं व्याख्यातौ (86) [5] चतुर्णामपि प्रपाठ-कानां एतदात्मनिष्ठता, नान्योऽन्तराळे कश्चिदपि विवक्षितोऽर्थः इत्येतत्प्रदर्श-नाय अन्ते उपसंहारः—स एष नेतिनेति—इति । यस्मात् प्रकारशतेनापि निरूप्यमाणे तत्त्वे नेतिनेत्यात्मैव निष्ठा, नाऽन्योपलभ्यते तर्केणागमेन वा । तस्मादेतदेवामृतत्वसाधनम्, यदेतन्नेतिनेत्यात्मपरिज्ञानं सर्वसंन्यासश्चेति । [6] अद्वैतं (ख)

## १००. भेदमात्रनिषेधस्यैव श्रुतिसिद्धत्वम्

किञ्च—'नेह नाऽस्ति किञ्चन' इत्यादिना भेदमात्रं निषिध्यते।[1] न चैतद्वाक्यं ब्रह्मगतभेदनिषेधपरम्, न तु भेदमात्रनिषेधपरम् इति वाच्यम्। किञ्चनेत्यनेन भेदमात्रनिषेधात्। ब्रह्मणि भेदाप्रसक्त्या, तन्निषेधायोगाच्च। न ह्युपनिषन्मात्रवेद्ये ब्रह्मणि प्रमाणान्तरेण भेदः प्रसक्तः। येन तन्निषेधेन सार्थकता। भेदमात्रस्य तु प्रत्यक्षादिसिद्धस्य मिथ्यात्वप्रतिपादनेन अर्थवत्त्वेति।

## १०१. अभेदश्रुतीनां उपासनापरत्वाभावः

न च — अभेदश्रुतीनां उपासना[2]परत्वमिति वाच्यम्। 'वाचं धेनुमुपासीत' इत्यादिवत् विध्यश्रवणात्। भेदश्रुतीनामपि उपासनापरत्वप्रसङ्गाच्च।[3]

## १०२. निर्गुणश्रुतीनां हेयगुणनिषेधपरत्वोक्तिनिरासः

न च— निर्गुणश्रुतीनां हेयगुणनिषेधे तात्पर्यम्, न तु गुणमात्र निषेधे; तथासति गुणश्रुतीनां अप्रामाण्यप्रसङ्गात्[4]–इति वाच्यम्। व्यावहारिकगुणप्रतिपादनेन सगुणश्रुतीनां प्रामाण्ये संभवति, तदर्थं[5] निर्गुणश्रुतिसङ्कोचायोगात्। अभेदश्रुतिविरोधाच्च।

## १०३. अद्वैतश्रुतीनां औपचारिकत्वनिराकरणम्

किञ्च—'विश्वं सत्यम्' इत्यादि प्रपञ्चसत्यत्वबोधक[6]श्रुतिविरोधात्, अद्वैतश्रुतीनां[7], 'त्वमेवाहम्' इत्यादिवत् औपचारिकत्व-

---

[1] किञ्चेत्यारभ्यैतद्वाक्यं नास्ति (ख) [2] उपासनापदं प्रकृते दृष्टिविधिपरं ध्येयम्। [3] उपासनापरत्वाच्च (ख) [4] प्रसङ्गः (ख) [5] तदर्थं इति नास्ति (ख) [6] सत्यत्वप्रतिपादक (क) [7] इति विरोधात् (ख)

मेवेति[1] वाच्यम् । सर्वासां अभेदश्रुतीनां, सर्वशाखासु क्रिया-समभिहारेण[2] अधीयमानानां अप्रामाण्यकल्पनापेक्षया, प्रपञ्च-सत्यत्वप्रतिपादकश्रुतीनां असद्वैलक्षण्य[3]रूपसत्यत्वप्रतिपादनपरतया प्रामाण्योपपादनस्यैव युक्तत्वात् । अन्यथा अनन्ताभेद[4]श्रुति-विरोधात्; प्रपञ्चसत्यत्वप्रतिपादकश्रुतीनामेव औपचारिकत्वमित्येव च[5] सुवचत्वात् ।[7]

१०४. भेदश्रुतीनां अद्वैतश्रुतिविरोधित्ववादनिरासः

एतेन भेदश्रुतीनामपि उपक्रमोपसंहारादि षड्विधतात्पर्यलिङ्गयुक्त-त्वात् अद्वैतश्रुतिपरिपन्थित्वं[6] निरस्तम् । उक्तगत्या व्यावहारिक-भेदप्रतिपादकत्वस्य युक्तत्वात् ।[7]

१०५. जगद्ब्रह्मणोः शरीरशरीरिभावेन सामानाधिकरण्योपपादक-रामानुजमतानुवादः

[8]यत्तु— 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वम्' इत्यादौ सामानाधिकरण्योपपादनम्, 'देवदत्ता'दि शब्दानां 'देव-मनुष्या'दि शब्दानां च[9] शरीरवाचकानां शरीरिपर्यन्तव्यवहारस्य लोकवेदयोर्दर्शनात्, अपृथक्सिद्धविशेषणवाचिशब्दानां विशेष्य-परत्वव्युत्पत्तेश्च,[10] शरीरशरीरिणोरपृथक्सिद्धत्वाच्च, विश्वस्य च[11] सर्वस्य चेतनाचेतनात्मकस्य अन्तर्यामिब्राह्मणे परमात्मशरीरत्व-

---

[1] त्वमिति (ख) [2] समभिव्याहारे (क) [3] असद्वैलक्षण्यं—शश-शृङ्गादिवैलक्षण्यम् इत्यर्थः । [4] अन्यथाऽभेद (क) [5] मित्यपि (ख) [6] श्रुतिसन्धित्वं (क) [7] त्वस्योक्तत्वात् (ग) [8] प्रसङ्गात् रामानुजमते अनुप-पत्तिं दर्शयति—यत्तु इत्यादिना । [9] देवमनुष्यादिशब्दानां इति नास्ति (क) [10] च इति नास्ति (क) [11] च इति नास्ति (क) विशिष्य (ख)

श्रुतेः, सर्वेषां प्रपञ्चवाचकानां शब्दानां, ब्रह्मवाचकशब्दानां च ब्रह्मवाचकत्वेन, ब्रह्मसामानाधिकरण्यश्रुतयः सर्वा अपि लक्षणां विनैव साधु सङ्गच्छन्ते—इति विषाणिमतम्[1]— तत् तुच्छम् ।

## १०६. तत्खण्डनम्

देवदत्तादिशब्दानां शरीरविशिष्टात्मवाचकत्वेन यथा 'देवदत्तः सुखी' 'देवदत्तः दुःखी'[2] इत्यादिः आत्ममात्रविषयकः व्यवहारः, [3]तथा—तस्मात् शब्दान्तरानपेक्ष एव 'देवदत्तः कृशः' 'देवदत्तः स्थूलः' 'सुन्दरः' इत्यादिः शरीरमात्रविषयकः व्यवहारोऽपि दृश्यते ।

एवं यथा— 'इन्द्रः सुखी' 'इन्द्रः सहस्राक्षः' 'विष्णुः सर्वज्ञः' 'विष्णुः नीलमेघश्यामः' इत्यादौ निष्कृष्टात्मवाचकशब्दान्तरसामानाधिकरण्याभावेऽपि, आत्ममात्रविषयकः शरीरमात्रविषयकश्च व्यवहारः, तथा 'पृथिवी' इत्यादौ व्यवहारादर्शनात्[4], न[5] पृथिव्यादीनां मुख्यशरीरत्वम् । अवयवसंस्थानविशेषविशिष्टशरीरवाचकानामेव तद्विशिष्टात्मपरत्वव्युत्पत्तेः । अन्यथा 'घटः सर्वज्ञः' 'घटः जगत्कर्ता'[6] इति विष्णुविषयकजनौपचारिकः[7] व्यवहारः प्रसज्येत ।

तत्र च इष्टापत्तौ—सर्वेषां शब्दानां विष्णुवाचकत्वमेवाङ्गीक्रियताम् । किं प्रपञ्चस्य तच्छरीरत्वमङ्गीकृत्य 'शरीरवाचकानां पदानां शरीरिपरत्व' व्युत्पत्तिप्रतिपादनक्लेशेन ?

---

[1] विषाणिमतं—रामानुमतम् । [2] यथा देवदत्तः सुखदुःखी (क) [3] विषयव्यवहारात् (क) [4] हारदर्शनात् (क) [5] न च (क) [6] भगवान् कर्ता (क) [7] विषये औपचारिक (क)

## १०७. तत्र तत्र दृष्टस्य तच्छरीरत्वव्यपदेशस्य तन्नियम्यत्वनिमित्तत्वम्

एवं च यथा तार्किकैः परमाणूनां ईश्वरशरीरत्वमङ्गीक्रियते साक्षात्प्रयत्नविषयत्वात्, तथा पृथिव्यादीनामपि ईश्वरनियम्यत्वात् तच्छरीरत्वव्यपदेशः औपचारिक एव। ततश्च औपचारिक-शरीरवाचकशब्दैः [1]नात्मसामानाधिकरण्यमुपपादयितुं शक्यम्। अतिप्रसङ्गस्य उक्तत्वात्।

## १०८. मुख्यवृत्त्या ब्रह्मसामानाधिकरण्यासम्भवः

किञ्च—शरीरवाचकमात्रस्य न शरीरिपरत्वव्युत्पत्तिः कल्पयितुं शक्या। तथासति[2] 'देहः आत्मा' 'शरीरं आत्मा' इत्यादि प्रयोगस्यापि साधुत्वापत्तेः। वैदिकैश्च सद्भिः[3] तत्र इष्टापत्तेः कर्तुं अशक्यत्वात्। साङ्केतिकानां [4]देवदत्तादिशब्दानां कथञ्चित् विशिष्टवाचकत्वेऽपि, निष्कृष्टदेहवाचकशब्दानां कथञ्चिदपि आत्म-सामानाधिकरण्यस्य मुख्यवृत्त्या वक्तुमशक्यत्वात्।

एवं प्रपञ्चवाचकानां शब्दानामपि न मुख्यवृत्त्या ब्रह्मसामानाधि-करण्यं वक्तुं शक्यम्।

## १०९. देवदत्तादिशब्दानामपि शरीरविशिष्टात्मवाचकत्वाभावनिरूपणेन मुख्यसामानाधिकरण्याभावदृढीकरणम्

वस्तुतस्तु — 'देवदत्ता'दि शब्दानामपि शरीरमात्रवाचकत्वमेव व्यवहारबलात् कल्प्यम्। न तु तद्विशिष्टात्मवाचकत्वम्, गौरवात्। लक्षणयैव क्वचित् सामानाधिकरण्यव्यवहारोपपत्तौ विशिष्टशक्तिकल्पनानौचित्यात्। अन्यथा नीलादिपदानामपि

---

[1] शब्देनात्म (क) [2] तथा सति इति नास्ति (ख) [3] सद्भिः इति नास्ति (ख) [4] साङ्केतिकदेव (ख)

विशिष्टशक्त्यापत्तेः। तत्र च इष्टापत्तौ[1] नानार्थकत्वकल्पनया[2] लक्षणैव लीयेत। यदि च 'शक्यसम्बन्धस्य दृष्टस्यैव नियामकत्वसम्भवे नादृष्टशक्तिकल्पना' इति, तदा तत्प्रकृतेऽपि तुल्यम्। तस्मात् 'इदं सर्वम्' इत्यादिनिष्कृष्टप्रपञ्चवाचकानां[3] शब्दानां न ब्रह्मात्मादिशब्दैः मुख्यं सामानाधिकरण्यं संभवतीति, तन्नियन्तृलक्षणादिनैव[4] सामानाधिकरण्यं उपपादनीयम्।

तथा च घट्टकुट्यां प्रभातम्।

## ११०. तद्रूपत्वेन तत्सामानाधिकरण्योक्तिदूषणम्

एतेन—यत्र जगद्ब्रह्मणोः सामानाधिकरण्यं दृश्यते, तत्र प्रायेण तन्निमित्तमपि श्रुतौ दृश्यते। यथा—"तदनुप्रविश्य, सच्च त्यच्चाभवत्" इत्यादौ।[5] तथा च—सदात्मकत्वात्[6] ब्रह्मणः, तद्रूपत्वेन तत्सामानाधिकरण्यं युक्त"मिति—निरस्तम्। सर्वत्र तथा प्रवृत्तिनिमित्तानभिधानात्। अत्रापि सत्त्यदात्मककार्यरूपत्वं वास्तवं न संभवतीति, तदधिष्ठानत्वेन, तत्कारणत्वेन वा तदात्मकत्वं वक्तव्यम्। तथा च[7] 'सर्वं ब्रह्म' इत्यादावपि लक्षणातो न मुक्तिः।

## १११. तत्कार्यत्वात् तत्सामानाधिकरण्योक्तेरपि खण्डनम्

न च—प्रपञ्चस्य ब्रह्मकार्यत्वात् 'मृत् घटः' इत्यादिवत् सामानाधिकरण्योपपत्तिः—इति वाच्यम्। आरम्भवादे प्रपञ्चब्रह्मणोः अत्यन्तभेदेन[8] सामानाधिकरण्यायोगात्।

---

[1] ततश्चेष्टापत्तौ (क) [2] र्थकल्पनया (क) [3] तस्मात् प्रपञ्चवाचकानां (क) [4] णादिना (क) [5] इत्यादिषु (क) [6] सत्त्यदात्मकत्वात् (क) [7] तदा (क) [8] अत्यन्तभेदेन (क)

ब्रह्मणो जगदुपादानत्वाङ्गीकारेऽपि 'तन्तवः पटः' इतिवत् सामानाधिकरण्याप्रसङ्गात् ।

## ११२. लक्षणयैव बाधायां सामानाधिकरण्यनिर्वाहोपपादनम्

तथा च—सुवर्णमृदादेः कार्यकारणवृत्तित्वेन 'सुवर्णं कुण्डलम्' 'मृत् घटः' इति सामानाधिकरण्योपपत्तावपि, ब्रह्मणः[1] प्रपञ्चापेक्षया अत्यन्तविलक्षणत्वात्, न कथञ्चिदपि लक्षणाव्यतिरेकेण सामानाधिकरण्यनिर्वाहः ।[2]

'राजा राष्ट्रम्' 'स राष्ट्रमभवत्'[3]

'स राष्ट्रमेव भवति' 'प्रजा राष्ट्रम्'[4] इत्यादिलौकिकवैदिकप्रयोगेष्वपि "लक्षणयैव सामानाधिकरण्यम्, न प्रकारान्तरेण' इतिन्यायेनैव प्रकृतेऽपि सामानाधिकरण्यनिर्वाहः ।"

तस्मात् एवंविधस्थले 'चोरः स्थाणुः' इतिवत् बाधायां सामानाधिकरण्यमेव—इति सिद्धान्तः ।

## ११३. बाधायां सामानाधिकरण्यस्यैव उपपादनम्

तथाहि—यथा स्थाणुं चोरत्वेन विपर्यस्य बिभ्यतं[5] प्रति कश्चिदाप्तः उपदिशति—'चोरः स्थाणुः, मा भैषीः' इति । तस्य चायमर्थः —"त्वया यः चोरत्वेन प्रतीतः सः स्थाणुः, न चोरः । अतो मा भैषीः ।" इति; तथा—प्रकृतेऽपि यदिदं[6] प्रतीयते, तत्सर्वं ब्रह्मैव तत्त्वम् । तेन तु[7] प्रतीयमानः अयं दृश्यमानः प्रपञ्चः— इति ।

---

[1] प्रपत्तिर्ब्रह्मणस्तु (क) [2] रण्यानिर्वाहः (क) [3] इदं वाक्यं नास्ति (ख) [4] तैत्तिरीयसंहितायां तृतीयकाण्डे तृतीयप्रश्ने [5] बिभ्यन्तं (क) [6] यदिदं सर्वं (ख) [7] तत्त्वेन तु (ख)

"य उदरमन्तरं कुरुते, अथ तस्य भयं भवति ।"[1]

"द्वितीयाद्वै भयं भवति ।"[2]

इत्यादिना भेददर्शनस्य भयहेतुत्वश्रुतेः,

"अभयं वै जनक ! प्राप्तोऽसि ।"[3]

इत्यादिना अभेददर्शनस्य भयनिवृत्तिहेतुत्वश्रुतेश्च ।

किञ्च —आरम्भणाधिकरणोदाहृतन्यायसहस्रैः[4] प्रपञ्चस्य मिथ्यात्वाच्च उक्तरूपेणैव सामानाधिकरण्यनिर्वाहः युक्तः ।

## ११४. प्रकारान्तरेण सामानाधिकरण्योपपादनखण्डनम्

एतेन—एकपदलक्षणयैव 'राजा राष्ट्रम्'[5] इत्यादिवत् सामानाधिकरण्योपपत्तौ, न पदद्वयलक्षणाङ्गीकारः—इत्यादि निरस्तम् । प्रपञ्चस्य मिथ्यात्वेन बाधस्यैव औचित्यात् ।[6]

## ११५. चिदचिदंशयोः वैरूप्यारोपणनिरसनम्

यत्तु—अत्र 'इदं सर्वम्' इति चेतनाचेतनात्मकसमस्तप्रपञ्च-

---

[1] यदा पुनरविद्यावस्थायां अविद्यया प्रत्युपस्थापितं वस्तु तैमिरिकद्वितीयचन्द्रवत् पश्यति, आत्मनि चैतस्मिन् ब्रह्मणि उत् अपि अरं अल्पं अन्तरं छिद्रं भेदं अल्पमन्तरं भेददर्शनं कुरुते, अथ तस्मात् भेददर्शनात् आत्मनः भयं भवति । तस्मात् आत्मैवात्मनो भयकारणं अविदुषः । [2] द्वितीयात् वस्त्वन्तराद्वै भयं भवति । द्वितीयं च वस्त्वन्तरं अविद्याप्रत्युपस्थापितमेव न ह्यदृश्यमानं द्वितीयं भयजन्मनो हेतुः । 'तत्र को मोहः कः शोकः एकत्वमनुपश्यतः' इति मन्त्रवर्णात् । [3] अभयं वै जन्ममरणादिनिमित्तभयशून्यं हे जनक ! प्राप्तोऽसि इति याज्ञवल्क्यः उक्तवान् । [4] न्यायसहस्रेण (क)

[5] राजराज्यकालीनोऽयं लोकव्यवहारः । स च अखण्डराष्ट्रस्य राजाधीनत्वसूचकः । [6] तथा च पदद्वयलक्षणादिकं प्रौढ्या उक्तमिति ध्येयम् ।

निर्देशेन ब्रह्मत्वोक्तौ, 'चिदंशे तादात्म्यम् अचिदंशे[1] बाधः' इति वैरूप्यम्'— इति विषाणिना[2] उक्तम्, तत् अबोधनिबन्धनम्। सर्वशब्दस्य इदंशब्दसामानाधिकरण्ये अनिदमंशचित्परत्वासम्भवेन, इदमंशस्य च[3] सर्वस्य बाध्यत्वेन, एकरूपेण बाधायामेव सामानाधिकरण्यात्। क्वचिदेतादृशस्थले इदंशब्दसामानाधिकरण्याभावेऽपि अनेन न्यायेन प्रपञ्चमात्रबाधपरत्वो[4]पपत्तेः। चिदंशस्य[5] जडत्वमङ्गीकृत्य इदमंशकोटिनिक्षेपस्य स्वमनीषामात्रकल्पितत्वात्। चिदंशस्य आत्मशब्देनोपात्ततया सर्वशब्दस्य तद्भिन्नपरत्वावश्यकत्वाच्च।

## ११६. बाधायां सामानाधिकरण्यानुपपत्त्याक्षेपनिरसनम्

न च —'चोरः स्थाणुः' इत्यत्र चोरत्वविरोधिस्थाणुत्ववत् अत्र प्रपञ्चविरोधिधर्मान्तरस्याभावात् कथं बाधः ? इति वाच्यम्। प्रपञ्चाभावात्मकब्रह्मस्वरूपज्ञान[6]स्यैव विरोधित्वेन धर्मान्तरानपेक्षत्वात्। प्रपञ्चाभावस्य च ब्रह्मस्वरूपत्वेऽपि प्रकारत्वाविरोधात्। विरोधिधर्मान्तरोपस्थापनस्य अप्रयोजकत्वात्। तादृशस्वरूपप्रकाशनेऽपि विरोधसिद्धेः। 'प्रमेयवत्' इति ज्ञानादौ अतिप्रसङ्गेन स्वरूपविशेषविषयकत्वेनैव ज्ञानस्य विरोधित्वात्, प्रपञ्चाभावस्य पञ्चमप्रकारत्वे भावाद्वैतपक्षे न किञ्चिदनुपपन्नम्।

## ११७. ब्रह्मणः निर्विशेषत्वासिद्ध्युपपादक(मध्व)मतानुवादः

---

[1] तादात्म्यवदचिदंशे (ख) [2] गोविषाणाकारपुण्ड्रधारणात् रामानुजाचार्यस्य विषाणिपदेनोल्लेखः कृतः परिहासगर्भः। वस्तुतस्तु—इदं अर्थदूषणमेव, न तु शब्ददूषणमिति भाव्यम्। [3] च इति नास्ति (ख) [4] चिदंशस्यापि (क) [5] बाधत्वो (क) [6] ब्रह्मरूप (क)

यदपि—एकाङ्गुलिनोक्तम्[1] — "अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन् गुणाः"[2] इति श्रुत्या ब्रह्मशब्दस्य गुणपूर्तिवाचित्वनिश्चयात्,

"तद्विजिज्ञासस्व, तद्ब्रह्मेति"

इत्यत्र जिज्ञास्यत्वेन श्रुतब्रह्मशब्दस्यापि सगुण[3]वाचकत्वात्, तन्निर्णयार्थं प्रवृत्तस्य "अथातो ब्रह्मजिज्ञासा" इत्यत्रत्यब्रह्मशब्दस्यापि सगुणवाचकतया, तदनुरोधेनैव च तल्लक्षणस्य[4] नेतव्यत्वात्, नैव निर्विशेषब्रह्माद्वैतसिद्धिः इति—तत् अतिस्थवीयः।

## ११८. तद्दूषणेन निर्विशेषत्वसाधनम्

उपक्रमादिबलवत्तात्पर्य[5]लिङ्गसहितपरस्सहस्रनिर्विशेषाद्वैतश्रुत्यनुरोधेन 'सत्यकामा'दिश्रुतिवत् 'बृहन्तो ह्यस्मिन् गुणाः'[6] इति श्रुतेरपि व्यावहारिकगुणप्रतिपादनपरत्वात्, ब्रह्मशब्दस्य गुणिवाचकत्वकल्पने मानाभावात्, 'बृह बृहि वृद्धौ' इति स्मृति[7]पर्यालोचनया, अद्वैतश्रुत्यनुरोधेन च[7] परिच्छेदत्रयरहितनिर्विशेषब्रह्मपरत्वस्यैव उचितत्वात्।

## ११९. श्रुतौ सगुणनिर्गुणवाक्ययोः परस्परबाध्यबाधकभावसमालोचनम्

---

[1] मध्वाचार्यस्य अंगुलिद्वयव्याख्यानावसरे द्वैतसूचकत्वेन तद्विवरणात्, अत्र तदुपहासतया एकांगुलिनेत्युक्तं इति भाति। [2] अथर्वशिरउपनिषत् (३-५) [3] स्यापि गुण (क) [4] च तल्लक्ष्यतया (क) [5] बलतात्पर्य (क) [6] अत्र स्मृतिशब्दप्रयोगात् पाणिनीयाष्टकस्यापि स्मृतिपदेन व्यवहारः आसीदिति ज्ञायते। [7] च इति नास्ति (ख)

सगुणवाक्यानां– सगुणोपासनयाऽपि[1] वैकुण्ठकैलासादिभोगद्वाराऽ-परमुक्तिसाधनत्वेन सार्थक्योपपत्तौ निर्गुणवाक्यबाधकत्वायोगात् ।

यथा—'सोमेन यजेत' इति सोमस्य यागसाधनत्वश्रुतावपि—'सोममभिषुणोति' 'सोमं पावयति' 'अण्व्या[2] धारया, सोमं गृह्णाति' इत्यादिवाक्यपर्यालोचनया — रसद्वारैव[3] कारणत्वम्, न तु साक्षात् —इति कल्प्यते—तद्वत्, अनेकाद्वैतश्रुतिविरोधेन सगुणप्रतिपादकत्वस्यैव ब्रह्मपदे त्याज्यत्वाच्च ।

१२०. वेदान्तेषु सगुणनिर्गुण-भेदाभेदवाक्यानां समन्वयप्रकारः

वेदान्तानां अध्यारोपापवादाभ्यां अद्वितीयब्रह्मप्रतिपादकत्वेन, सगुणवाक्यानां विरोधगन्धाभावात् । पुराणादौ निर्गुणनिन्दया सगुणश्रुतेश्च[4] 'न हि निन्दा' न्यायेन सगुणोपासनास्तुतिपरतया, निर्गुणबाधकत्वायोगाच्च ।

"भेददर्शनमास्थाय मुक्तिं वाञ्छन्ति ये नराः
ते महाघोरसंसारसर्पदष्टाः न संशयः ।"

"मन्यन्ते विश्वमात्मानं विभिन्नं परमेश्वरात् ।
ते न पश्यन्ति तं देवं वृथा तेषां परिश्रमः ।"

"कटकमकुटकर्णिकादिभेदैः
कनकमभिन्नमपीष्यते यथैकम् ।[5]
सुरपशुमनुजादिकल्पनाभिः
हरिरखिलाभिरुदीक्ष्यते तथैकः ॥"[6]

---

[1] पासनाया अपि (क) [2] पण्या (क) [3] नया सद्वारा (क)
[4] सगुणस्तुतेः (ख) [5] यदेकम् (क) [6] श्रीमद्भागवतेमहापुराणे इमे श्लोकाः दृश्यन्ते ।

"त्वत्तादात्म्य[1]मिदं सर्वं नेह नानाऽस्ति किञ्चन ।
अद्वैतमेव शास्त्रार्थः शम्भोः पादं स्पृशाम्यहम् ।"

इत्यादीनां भेदनिन्दया अभेदप्रतिपादकानां प्रमाणानां[2] कोटि-कोटिशः[3] उपलब्धेश्च ।

## १२१. ब्रह्मपदस्य सविशेषपरत्वाभावदृढीकरणम्

एतेन—उदाहृतश्रुत्या ब्रह्मशब्दस्य गुणपूर्तिवाचकत्वनिश्चयात्, निर्गुणत्वस्य च वाक्यगम्यत्वात्, श्रौतसगुणत्वेन वाक्यगम्य-निर्गुणत्वस्य बाधः—इत्यपि निरस्तम् ।

"आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्" इति न्यायेन अभेद-वाक्यैः गुणश्रुतेरेव बाध्यत्वात् । अन्यथा नामश्रुत्या रसवाक्यानि बाध्येरन् ।

"अथ कस्मादुच्यते परं ब्रह्मेति ? बृहति बृंहति वा,
तस्मादुच्यते परं ब्रह्मेति ।"[4]

इति श्रुत्या बृहतिधात्वर्थे परिच्छेदत्रयराहित्ये एव ब्रह्मशब्दस्य शक्तिनिश्चयाच्च । गुणगतबृहत्त्वस्य गुणिशब्दप्रवृत्तिनिमित्तत्वा-सम्भवाच्च ।

## १२२. ब्रह्मपदस्य गुणविशिष्टे शक्त्यभावनिरूपणम्

ब्रह्मनिष्ठानां गुणानां बृहत्त्वेन[5] ब्रह्मणोऽपि बृहत्त्वं औपचारिकम् - इति चेत्—तर्हि न शक्तिः । गुणगतबृहत्त्वं प्रवृत्तिनिमित्तीकृत्य गुणिनि कुतो न शक्तिः ? इति चेन्न । रूपत्वं प्रवृत्तिनिमित्ती-कृत्य रूपपदस्य घटेऽपि शक्तिप्रसङ्गात् ।

---

[1] तत्तादात्म्य (क) [2] प्रमाणानां इति नास्ति (ख) [3] कोटिशः (ख)
[4] अथर्वशिरउपनिषदि (३-५) [5] बृहत्त्वे (ख)

न च– रूपपदस्य घटे प्रयोगो नास्तीति वाच्यम् । प्रयोगसम्भवेऽपि नीलादिवत् गुणिनि लक्षणयैवोपपत्तौ शक्त्यकल्पनात् ।

अत एव बृहत्त्वविशिष्टे शक्तिकल्पनमपि निरस्तम् । तथासति नीलादिन्यायेन लक्षणापत्तेः ।

तस्मात् ब्रह्मशब्दस्य न गुणविशिष्टशक्तिवशात् निर्गुणवाक्य-विरोधः शङ्कनीयः इति ॥

इति भेदनिरासे श्रुतिविरोधपरिहार-
प्रकरणम् ॥

— ० —

## ॥ अथ उपमानादिविरोधपरिहारप्रकरणम् ॥

---

१२३. उक्ते अद्वैते उपमानादिप्रमाणाविरोधोपपादनारम्भः—
तत्र उपमानाविरोधः

एवं प्रत्यक्षानुमानशब्दैः अद्वैतवाक्यानां विरोधे परिहृते, प्रमाणान्तरेण[1] विरोधस्तु शङ्कापथमेव नाधिरोहति । तथाहि—उपमानं[2] तावत् शक्तिग्राहकत्वेन नियतविषयं न भेदमवगाहते । न च सादृश्यादेर्भेदैकनिबन्धनत्वात् भेदसाधकत्वं युक्तं वक्तुम् । व्यावहारिकभेदेनैव तदुपपत्तेः ।

१२४. अर्थापत्तिप्रमाणाविरोधः

अनुमानविरोधपरिहारादेव तत्तुल्ययोगक्षेमार्थापत्ति[3]विरोधोऽपि निरस्तो वेदितव्यः । अभेदश्रुत्यन्यथानुपपत्तिप्रसूतार्थापत्तेरेव प्रबलत्वाच्च ।

१२५. अनुपलब्धिप्रमाणाविरोधः

एवं[4] अनुपलब्धिविरोधोऽपि नास्ति । प्रत्यक्षविरोधपरिहारेण दत्तोत्तरत्वात् ।

---

[1] वेदान्तिभिः प्रत्यक्षानुमानोपमानशब्दाः अर्थापत्तिरनुपलब्धिश्चेति प्रमाणषट्काङ्गीकारात् उक्तम्—प्रमाणान्तरेणेति । [2] सादृश्यप्रमाकरणं उपमानम् इति वेदान्तिनां परिभाषा । [3] उपपाद्यज्ञानेन उपपादककल्पनम् अर्थापत्तिः । नैयायिकानां मते अर्थापत्तिः न प्रमाणान्तरम् । व्यतिरेकव्याप्त्या अनुमाने अन्तर्भावात् । वेदान्तिमते तु साध्याभावेन साधनाभावस्य सिद्धावपि साध्यसिद्धौ न तस्योपयोगः । तथा च अर्थापत्तिप्रमाणादेव व्यतिरेकव्याप्तिज्ञानादनुमितिः इति । [4] 'एवं' इति नास्ति (ख)

न च—"यदि जीवेश्वरयोः अभेदः स्यात् तर्हि उपलभ्येत, न चोपलभ्यते, अतो नास्ति" इति अनुपलब्ध्या अभेदश्रुतीनां बाधः इति वाच्यम् । अनुपलब्धिमात्रस्य अभावग्राहकत्वे अतिप्रसङ्गात् । आत्मनः परममहद्भेदस्यापि अनुपलब्धिवशादापत्तेः । न च—महत्त्वस्य अयोग्यत्वात्, योग्यानुपलब्धेरेव च अभावग्राहकत्वात्, न तत्र तद्भेदग्रहः—इति वाच्यम् । ईश्वरगतसर्वज्ञत्वादेरपि जीवस्य अयोग्यत्वेन, तद्भेदस्यापि ग्रहीतुमशक्यत्वात् ।

अस्तु वा ईश्वरात् भेदग्रहः, न तावता औपनिषदाभेदविरोधः । नहि सर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविशिष्टयोरभेदः श्रुत्यर्थः ।[1] किन्तु उभयानुगतशुद्धचैतन्यस्याभेदः । न च तत्र अनुपलब्धिबाधः । आत्मनः चैतन्यात्मकतया प्रकाशमानस्य स्वरूपतो भेदानवभासात् ।

## १२६. अद्वैतेशास्त्रवैयर्थ्यापत्तिनिरासः

न चैवं — चैतन्यात्मना अभेदस्य इदानीमपि भासमानत्वात् 'तत्त्वमस्या'दिवाक्यवैयर्थ्यम्, शास्त्रवैय्यर्थ्यं च, इदानीमपि मुक्त्यापत्तिश्चेति वाच्यम् । निरतिशयसत्यज्ञानानन्दाभेदस्य इदानीं प्रत्यक्षत्वाभावात् ।

वस्तुतः सत्यज्ञानानन्दात्मकत्वेऽपि अविद्याकल्पितभेदसत्त्वेन तदभेदस्य आवृतत्वात्, 'तत्त्वमस्या'दिना अभेदापरोक्ष्ये तदावारकाज्ञाननिवृत्तेः ।

## १२७. तत्त्वमस्यादिवाक्यप्रमेयाभेदस्य धर्मिस्वरूपत्वेऽप्यदोषत्वम्

ननु— वाक्यप्रमेयोऽभेदः धर्मिस्वरूपम् ? तदतिरिक्तम् वा ?

---

[1] तत्त्वमस्यादिश्रुत्यर्थः इत्यर्थः ।

आद्ये—'अहम्' इति ज्ञानेनैव तदपि विषयीकृतमिति वाक्यानुसन्धान[1]वैयर्थ्यम् । द्वितीये[2]—अद्वैतहानिः—इति चेत् न । अभेदस्य स्वरूपत्वेऽपि तद्धियः सामान्यविशेषापेक्षत्वोपपत्तेः । यथा प्रतियोगित्वानुयोगित्वाधाराधेयत्वादीनां स्वरूपरूपत्वेऽपि[3] तत्तद्विशेषणज्ञानादिविशेषसामग्रीजन्यज्ञानविशेषज्ञेयत्वं, तद्वत् सत्यज्ञानानन्दाद्यात्मकपरमात्माभेदस्य स्वरूपरूपत्वेऽपि 'तत्त्वमस्या'दिवाक्यगतत्वंपद[4]वाच्याद्यर्थानुसन्धानपूर्वक 'तत्त्वमस्या'दिवाक्यैः गम्यत्वोपपत्तेः ।

तादृशवाक्यजन्याभेदज्ञानमेव अविद्यानिवर्तकमिति श्रुतिबलात् कल्पनाच्च । 'प्रमेयम्' इति ज्ञानात् संशयाद्यनिवृत्त्या, स्वरूपविषयकत्वेन संशयादिप्रतिबन्धि इत्यस्य सर्वसम्प्रतिपत्तेश्च ।[5]

अत एव ब्रह्म निर्विकल्पकं नाज्ञाननिवर्तकम्, समानप्रकारत्वेनैव अन्यत्र ज्ञानस्य विरोधित्वकल्पनात्—इत्यादि च निरस्तम् । प्रकारत्वविवक्षायामपि स्वरूपविशेषविषयकत्वस्य आवश्यकत्वेन, लाघवेन स्वरूपविशेषविषयकत्वेनैव विरोधकल्पनात् ।

## १२८. अनुपलब्धिप्रमाणविरोधाभावनिगमनम्

तस्मात् अविद्यया अभेदानुपलम्भसम्भवात्, नाद्वैतश्रुतेः अनुपलब्धिविरोधः ।

इति उपमानादिविरोधपरिहारप्रकरणम् ।

— o —

[1] तत्त्वमस्यादिवाक्यानुसन्धानेत्यर्थः । [2] धर्मिस्वरूपातिरिक्तत्वाङ्गीकारे इत्यर्थः । [3] अपि इति नास्ति (ख) [4] त्वं पदादि (क) [5] सम्प्रतिपत्तेः (क)

१२९ सर्वप्रमाणाविरोधकथनेन ग्रन्थार्थनिगमनम्

एवं सम्भवैतिह्ययोः[1] मानान्तरत्वेऽपि सर्वथा नाद्वैतबाधकत्वम् ।

तस्मात् अद्वैतश्रुतीनां न प्रमाणान्तर-
विरोधगन्धोऽपि—इति सर्वमनवद्यम् ॥

इति श्रीमहामहोपाध्याय–श्रीमदद्वैतविद्याचार्य–श्रीराघवसोमयाजि
कुलोत्तंस–श्रीतिरुमलाचार्यवर्यस्य सूनोः श्रीमदन्नम्भट्टस्य
कृतिषु भेदनिरासप्रकरणं सम्पूर्णम् ॥

—०—

[1] अल्पप्रमासाधनं बहुलज्ञानं सम्भवः । अयं च शते पञ्चाशन्न्याय-पर्यायः । नैयायिकास्तु—अविनाभावसम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः, तदप्यनुमानमेवेत्याहुः । ऐतिह्यं नाम अनिर्दिष्ट-प्रवक्तृकं परम्परागतवाक्यम्—यथा इह वटे यक्ष तिष्ठतीत्यादि । अस्यापि आप्तवाक्यात्मके शब्दे अनुमाने वा अन्तर्भावं वदन्ति । अत एवात्र 'मानान्त-रत्वेऽपि' इति उक्तम् इति संक्षेपः । अस्यैवार्थस्य भेदनिरासात्मकस्य विस्तरः अद्वैतसिद्धिब्रह्मानन्दीयादौ द्रष्टव्यः । इति शम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

—०—

# भेदनिरासस्य अनुबन्धाः

— ० —

१) ग्रन्थस्थविषयाणामकाराद्यनुक्रमः
२) प्रमाणतया उद्धृतानां वाक्यानामकाराद्यनुक्रमः
३) न्यायानामकाराद्यनुक्रमः
४) लौकिकप्रतीतिव्यवहारवाक्यानां अकाराद्यनुक्रमः
५) ग्रन्थे उद्धृतानां ग्रन्थग्रन्थकारादिनाम्नां अकाराद्यनुक्रमः

— ० —

## भेदनिरासग्रन्थस्थविषयाणां अकाराद्यनुक्रमणिका

### अ

द



न



द



ब



भ

इति भेदनिरासगतविषयाणां अकारादिसूचनी
समाप्ता ।

— o —

## उद्धृतानां प्रमाणानां अकारादिसूचनी

— ० —

इति भेदनिरासग्रन्थोदाहृतप्रमाणानां
अकारादिसूचनी समाप्ता ।

— o —

## उदाहृतानां न्यायानां अकारादिसूचनी

— ० —

इति भेदननिरासग्रन्थे उदाहृतानां न्यायानां अकाराद्यनुक्रमणिका समाप्ता ॥

— ० —

## भेदनिरासे उदाहृतानां प्रतीति-व्यवहारसिद्धप्रयोगाणां अकाराद्यनुक्रमः

—०—

इतिभेदनिरासे उदाहृतानां प्रतीतिव्यवहारसिद्धप्रयोगाणां अकाराद्यनुक्रमः

— o —

# भेदनिरासे उद्धृतानां ग्रन्थ ग्रन्थकारादिनाम्नां अकाराद्यनुक्रमः

— ० —



इति भेदनिरासोदाहृतग्रन्थग्रन्थकारादिनाम्नां

अकाराद्यनुक्रमणिका समाप्ता

— ० —




# LIST OF BOOKS

## मैसूरु प्राच्यविद्यासंशोधनालये परिष्कृत्य प्रकाशितानां संस्कृतग्रन्थानां सूचनी

— o —

प्राच्यविद्यासंशोधनालयः

मैसूरु विश्वविद्यानिलयः

मैसूरु

ORIENTAL RESEARCH INSTITUTE
MYSORE

## मैसूरुविश्वविद्यालयप्राच्यविद्यासंशोधनालये परिष्कृत्य प्रकाशिताः विक्रय्यसंस्कृतग्रन्थाः

— o —

| मालाङ्काः | ग्रन्थनामानि | मूल्यानि | |
|---|---|---|---|
| 1* | आपस्तम्बगृह्यसूत्रम् – सुदर्शनाचार्यप्रणीततात्पर्यदर्शनाख्य-भाष्यसहितम् | 1 | 75 |
| 2* | आपस्तम्बयज्ञपरिभाषासूत्रम् – हरदत्तकपर्दिस्वामि भाष्याभ्यां सहितम् | 1 | 00 |
| 3* | माधवीया धातुवृत्तिः (अदादि दिवादि जुहोत्यादयः) (द्वितीयसम्पुटे प्रथमभागः) | 2 | 00 |
| 4* | तैत्तिरीयसंहिता सस्वरचिह्ना, सपदपाठा, भट्टभास्करी-यज्ञानयज्ञाख्यभाष्यसहिता च (प्रथमं संपुटम्) | 2 | 50 |
| 5* | तैत्तिरीयसंहिता – सस्वरचिह्ना सपदपाठा, भट्टभास्करी-यज्ञानयज्ञाख्यभाष्यसहिता च (द्वितीयं संपुटम्) | 2 | 50 |
| 6* | दक्षिणामूर्तिस्तोत्रम् - सुरेश्वराचार्यटीकासहितम् | 1 | 25 |
| 7* | तैत्तिरीयसंहिता (तृतीयं सम्पुटम्) | 3 | 00 |
| 8* | श्रीमद्भगवद्गीता – श्रीशङ्कराचार्यविरचितभाष्यसहिता | 2 | 75 |
| 9* | तैत्तिरीयसंहिता (चतुर्थं सम्पुटम्) | 3 | 00 |
| 10* | मण्डलब्राह्मणोपनिषत् – शङ्कराचार्यरचितराजयोग-भाष्यसहिता | 1 | 00 |
| 11* | सौन्दर्यलहरी – शङ्कराचार्यरचिता, लक्ष्मीधराचार्यकृत-व्याख्यासहिता, भास्कराचार्यरचितभाष्यसहितभाव-नोपनिषदा, कालिदासकृतया पञ्चस्तव्या च सहिता | 1 | 00 |

* एवंचिह्नाङ्किताः ग्रन्थाः समाप्तमुद्रणाः संप्रति विक्रयायात्र नोपलभ्यन्ते ।

| | | |
|---|---|---|
| 12* तैत्तिरीयसंहिता (पञ्चमं सम्पुटम्) | 3 | 00 |
| 13* तैत्तिरीयसंहिता (षष्ठं सम्पुटम्) | 4 | 00 |
| 14* तैत्तिरीयसंहिता (सप्तमं सम्पुटम्) | 3 | 00 |
| 15* आपस्तम्बधर्मसूत्रम् – हरदत्ताचार्यप्रणीतया उज्ज्वलाख्य-वृत्त्या सहितम् | 1 | 75 |
| 16* तैत्तिरीयसंहिता (अष्टमं सम्पुठम्) | 3 | 00 |
| 17* तैत्तिरीयसंहिता (नवमं सम्पुटम्) | 2 | 25 |
| 18* तैत्तिरीयसंहिता (दशमं सम्पुटम्) | 1 | 25 |
| 19* श्रीशङ्कराचार्यप्रबन्धावली – (विष्णुसहस्रनामभाष्यम्, सनत्सुजातीयभाष्यं च) (प्रथमं सम्पुटम्) | 1 | 25 |
| 20* श्रीशङ्कराचार्यप्रबन्धावली – (अपरोक्षानुभूतिः, शतश्लोकी, हरिस्तुतिः, दशश्लोकी च व्याख्यासहिताः)(द्वितीयं सम्पुटम्) | 1 | 25 |
| 21* श्रीशङ्कराचार्यप्रबन्धावली – (उपदेशसाहस्री गद्यपद्योभया-त्मिका रामतीर्थव्याख्यायुता) (तृतीयं सम्पुटम्) | 2 | 00 |
| 22* श्रीशङ्कराचार्यप्रबन्धावली – (आत्मबोधः, विवेकचूडामणिः, वाक्यवृत्तिः, स्वात्मनिरूपणम्, योगतारावली, सर्वसिद्धान्त-सारसंग्रहश्च) (चतुर्थं सम्पुटम्) | 1 | 00 |
| 23* माधवीया धातुवृत्तिः भ्वादौ प्रथमभागः (प्रथमभागे प्रथमं सम्पुटम्) | 2 | 00 |
| 24* माधवीया धातुवृत्तिः भ्वादौ द्वितीयभागः (प्रथमभागे द्वितीयं सम्पुटम्) | 2 | 00 |
| 25* गोत्रप्रवरनिबन्धकदम्बम् | 2 | 00 |
| 26* तैत्तिरीयारण्यकम् – भट्टभास्करीयभाष्यसहितम् (प्रथमं सम्पुटम्) | 1 | 57 |

27* तैत्तिरीयारण्यकम् – भट्टभास्करीयभाष्यसहितम्
(द्वितीयं सम्पुटम्) 1 00
28* एकाग्निकाण्डः – हरदत्तीयभाष्यसहितः 1 25
29* तैत्तिरीयारण्यकम् – भट्टभास्करीयभाष्यसहितम्
(तृतीयं सम्पुटम्) 1 00
30* ब्रह्ममीमांसा, श्रीकण्ठभाष्यसहिता 2 00
31* माधवीया धातुवृत्तिः स्वादिमारभ्य समग्रा (द्वितीयभागे
द्वितीयं सम्पुटम्) 2 00
32* बोधायनगृह्यसूत्रम् सपरिशिष्टम् 2 25
33* तैत्तिरीयप्रातिशाख्यम् – (वैदिकाभरण–त्रिभाष्यरत्नकाख्य
व्याख्याद्वययुतम्) 4 00
34* बोधायनधर्मसूत्रम्, गोविन्दस्वामिविवरणसमेतम् 3 00
35* भाट्टदीपिका खण्डदेवकृता (प्रथमं सम्पुटम्) 3 00
36* तैत्तिरीयब्राह्मणम् - भट्टभास्करभाष्यसहितम् (प्रथमाष्टकम्) 3 50
37* कौटलीयं अर्थशास्त्रम् (प्रथममुद्रणम्) 3 00
38* तैत्तिरीयब्राह्मणम् – भट्टभास्करभाष्यसहितम् (तृतीयाष्टके
प्रथमभागः) 3 50
39* श्रीमद्ब्रह्मसूत्रभाष्यम् – आनन्दतीर्थीयम् तत्त्वप्रकाशिका
चंद्रिका प्रकाशसहितम् (प्रथमं सम्पुटम्) 3 00
40* भाट्टदीपिका खण्डदेवरचिता (द्वितीयं सम्पुटम्) 3 00
41* खादिरगृह्यसूत्रम् रुद्रस्कन्दीयवृत्तिसहितम् 1 00
42* तैत्तिरीयब्राह्मणम् – भट्टभास्करभाष्यसहितम् (तृतीयाष्टके
द्वितीयभागः) 2 25
43* स्मृतिचन्द्रिका – याज्ञिकदेवणभट्टकृता (संस्कारकाण्डः) 1 50
44* „ (आह्निककाण्डः) 2 50

| | | | |
|---|---|---|---|
| 45* | स्मृतिचन्द्रिका – याज्ञिकदेवणभट्टकृता (व्यवहारकाण्डे प्रथमं सम्पुटम्) | 2 | 00 |
| 46* | भाट्टदीपिका – खण्डदेवविरचिता (तृतीयं सम्पुटम्) | 2 | 50 |
| 47* | श्रीमद्ब्रह्मसूत्रभाष्यम् – आनन्दतीर्थीयं तत्त्वप्रकाशिका चंद्रिका प्रकाशसहितम् (द्वितीयं सम्पुटम्) | 3 | 00 |
| 48* | स्मृतिचन्द्रिका – याज्ञिकदेवणभट्टकृता (व्यवहारकाण्डे द्वितीयं सम्पुटम्) | 3 | 00 |
| 49* | भाट्टदीपिका खण्डदेवविरचिता (चतुर्थं सम्पुटम्) | 3 | 00 |
| 50* | गौतमधर्मसूत्रम् – मस्करिभाष्यसहितम् | 3 | 75 |
| 51* | अलङ्कारमणिहारः (प्रथमं सम्पुटम्) | 3 | 00 |
| 52* | स्मृतिचन्द्रिका – याज्ञिकदेवणभट्टकृता (श्राद्धकाण्डः) | 3 | 25 |
| 53* | श्रीमद्ब्रह्मभाष्यसूत्रम् – आनन्दतीर्थीयम् तत्त्वप्रकाशिका चन्द्रिका प्रकाशसहितम् (तृतीयं सम्पुटम्) | 4 | 00 |
| 54* | कौटलीयं अर्थशास्त्रम् – (द्वितीयमुद्रणम्) | 3 | 00 |
| 55* | बोधायनगृह्यसूत्रम् सपरिशिष्टम् (द्वितीयं मुद्रणम्) | 2 | 23 |
| 56* | स्मृतिचन्द्रिका याज्ञिकदेवणभट्टकृता (आशौचकाण्डः) | 1 | 50 |
| 57* | तैत्तिरीयब्राह्मणम् – भट्टभास्करीय सायणीय भाष्याभ्यां युतम् (द्वितीयाष्टकम्) | 3 | 50 |
| 58* | अलङ्कारमणिहारः (द्वितीयं सम्पुटम्) | 3 | 50 |
| 59* | श्रीमद्ब्रह्मसूत्रभाष्यम् – आनन्दतीर्थीयं तत्त्वप्रकाशिका चन्द्रिका प्रकाशयुतम् (चतुर्थं सम्पुटम्) | 3 | 50 |
| 60* | काव्यप्रकाशः – मम्मटभट्टकृतः माणिक्यचन्द्रकृतसङ्केत-टीकायुतः | 3 | 50 |
| 61* | आयुर्वेदसूत्रम् – योगानन्दनाथभाष्यसहितम् | 2 | 00 |
| 62* | अलङ्कारमणिहारः (तृतीयं सम्पुटम्) | 2 | 50 |

| | | | |
|---|---|---|---|
| 63* | विद्यामाधवीयम् – विष्णुशर्मकृतमुहूर्तदीपिकायुतम् (प्रथमं सम्पुटम् ) | 2 | 00 |
| 64* | कौटलीयं अर्थशास्त्रम् (तृतीयं मुद्रणम् ) | 3 | 00 |
| 65* | अर्थशास्त्रपदसूची (प्रथमं सम्पुटम् ) | 2 | 50 |
| 66* | „ (द्वितीयं „ ) | 2 | 50 |
| 67* | विद्यामाधवीयम् – विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् (द्वितीयं सम्पुटम् ) | 2 | 00 |
| 68* | अर्थशास्त्रपदसूची (तृतीयं संपुटम् ) | 2 | 00 |
| 69* | अभिलषितार्थचिन्तामणिः (प्रथमं संपुटम् ) | 2 | C0 |
| 70* | विद्यामाधवीयम् – विष्णुशर्मकृतमुहूर्तदीपिकाटीकायुतम् (तृतीयं संपुटम् ) | 1 | 50 |
| 71 | सरस्वतीविलासः (व्यवहारकाण्डः) | 2 | 50 |
| 72* | अलङ्कारमणिहारः (चतुर्थं संपुटम् ) | 2 | 25 |
| 73* | तर्कताण्डवम् – व्यासयतिकृतं न्यायदीपाख्यव्याख्यायुतम् (प्रथमं संपुटम् ) | 3 | 00 |
| 74* | आपस्तम्बशुल्बसूत्रम् – कपर्दीय करविन्दीय सुन्दरराजीय-व्याख्याभिः सहितम् | 2 | 75 |
| 75* | अद्वैतसिद्धिः – मधुसूदनसरस्वतीकृता गुरुचन्द्रिकाटीकायुता (प्रथमं संपुटम् ) | 3 | 75 |
| 76* | तत्त्वमुक्ताकलापः – वेदान्ताचार्यकृतः स्वोपज्ञसर्वार्थसिद्धि तद्व्याख्याऽऽनन्ददायिनीभावप्रकाशाभ्यां युतः (प्रथमं संपुटम् ) | 4 | 00 |
| 77* | तर्कताण्डवम् – व्यासयतिकृतं न्यायदीपाख्य व्याख्यायुतम् (द्वितीयं संपुटम् ) | 2 | 00 |

| | | | |
|---|---|---|---|
| 78* | अद्वैतसिद्धिः – मधुसूदनसरस्वतीकृता गुरुचन्द्रिकाटीकायुता (द्वितीयं संपुटम्) | 3 | 25 |
| 79* | तर्कताण्डवम् – व्यासयतिकृतं न्यायदीपाख्य व्याख्यायुतम् (तृतीयं संपुटम्) | 2 | 00 |
| 80* | अद्वैतसिद्धिः – मधुसूदनसरस्वतीकृता गुरुचन्द्रिकाटीकायुता (तृतीयं संपुटम्) | 2 | 25 |
| 81* | तत्त्वमुक्ताकलापः – वेदान्ताचार्यकृतः स्वोपज्ञसर्वार्थसिद्धि तद्व्याख्याऽऽनन्ददायिनीभावप्रकाशाभ्यां सहितः (द्वितीयं संपुटम्) | 3 | 00 |
| 82 | तर्कताण्डवम् – व्यासयतिकृतं न्यायदीपाख्यव्याख्यायुतम् (चतुर्थं संपुटम्) | 2 | 25 |
| 83 | वाक्यार्थरत्नम् सुमर्णमुद्रिकाव्याख्यासहितम् | 1 | 00 |
| 84 | तत्त्वार्थसूत्रम् – श्रीमदुमास्वामिरचितं सुखबोधाख्यवृत्तियुतम् | 2 | 25 |
| 85* | सौन्दर्यलहरी – शङ्कराचार्यरचिता लक्ष्मीधराचार्यरचित-व्याख्यानयुता भास्कराचार्यरचितभाष्यसहितभावनोपनिषदा, कालिदासकृतपञ्चस्तव्या च सहिता (द्वितीयं मुद्रणम्) | 2 | 50 |
| 86* | यादवाभ्युदयम् – वेदान्तदेशिकविरचितम् अप्पय्यदीक्षित-विरचितव्याख्यायुतम् (प्रथमं संपुटम्) | 3 | 25 |
| 87* | आपस्तम्बश्रौतसूत्रम् – रामाग्निचिद्वृत्तिसहितधूर्तस्वामि-भाष्यसहितम् (प्रथमं संपुटम्) | 4 | 00 |
| 88 | प्रमेयरत्नालङ्कारः – अभिनवचारुकीर्तिपण्डिताचार्यविरचितः | 2 | 75 |
| 89* | यादवाभ्युदयम् – वेदान्तदेशिकविरचितम् अप्पय्यदीक्षित-विरचितव्याख्ययुतम् (द्वितीयं संपुटम्) | 5 | 00 |

| | | | |
|---|---|---|---|
| 90* | शैवपरिभाषा शिवाग्रयोगिरचिता | 3 | 00 |
| 91* | सौन्दर्यलहरी (तृतीयं मुद्रणम्) | 3 | 00 |
| 92 | प्राकृतमणिदीपः — अप्पय्यदीक्षितप्रणीतः (प्रथमं संपुटम्) | 6 | 25 |
| 93 | आपस्तम्बश्रौतसूत्रम् वृत्तिभाष्यभूषितम् (द्वितीयं संपुटम्) | 8 | 50 |
| 94 | तत्त्वमुक्ताकलापः सव्याख्यः (तृतीयं संपुटम्) | 6 | 75 |
| 95 | क्रियासारः — नीलकण्ठशिवाचार्यरचितः (प्रथमं संपुटम्) | 5 | 50 |
| 96 | वेदान्ततत्त्वविवेकः — श्रीनृसिंहाश्रमिरचितः सव्याख्यः | 15 | 00 |
| 97 | तत्त्वमुक्ताकलापः सव्याख्यः (चतुर्थं संपुटम्) | 6 | 00 |
| 98 | नीतिसूत्राणि — बृहस्पति चाणक्य सोमदेवैः विरचितानि, अर्थशास्त्रसंग्रहश्च | 2 | 75 |
| 99 | क्रियासारः — नीलकण्ठशिवाचार्यरचितः (द्वितीयं संपुटम्) | 6 | 00 |
| 100 | „ „ (तृतीयं संपुटम्) | 5 | 00 |
| 101 | सेवन्तिकापरिणयं नाटकम् चोक्कनाथविरचितम् | 2 | 25 |
| 102 | वाल्मीकिरामायणम् — माधवयोगिरचितया अमृतकतक-व्याख्यया युतम् बालकाण्डः (प्रथमं संपुटम्) | 5 | 50 |
| 103* | कौटलीयं अर्थशास्त्रम् (परिष्कृताभिनवमुद्रणम्) | 14 | 00 |
| 104 | आपस्तम्बश्रौतसूत्रम् वृत्तिभाष्यसहितम् (तृतीयं संपुटम्) | 10 | 00 |
| 105 | विष्णुसहस्रनामस्तोत्रम् नामावली शङ्करभाष्यार्थसंग्रह-पद्यप्रसूनाञ्जलिभिः सहितम् | 4 | 00 |
| 106 | विष्णुसहस्रनामस्तोत्रम् — तारकब्रह्मानन्दसरस्वतीयविवृत्ति-समेत शाङ्करभाष्यसहितम् | 13 | 25 |
| 107 | वाल्मीकिरामायणम् — अमृतकतकव्याख्यायुतम् अयोध्या-काण्डे प्रथमभागः (द्वितीयं संपुटम्) | 5 | 50 |

| | | | |
|---|---|---|---|
| 108 | शिवतत्त्वरत्नाकरः – केलदिबसवभूपालरचितः (प्रथमं संपुटम्) | 9 | 75 |
| 109 | सिद्धान्तसिद्धाञ्जनम् – कृष्णानन्दसरस्वतीविरचितम् भास्करदीक्षितकृतरत्नतूलिकाव्याख्यायुतम् (प्रथमं संपुटम्) | 11 | 00 |
| 110 | वाल्मीकिरामायणम् – अमृतकतकव्याख्यायुतम् अरण्यकाण्डः (चतुर्थं संपुटम्) | 9 | 75 |
| 111 | वाल्मीकिरामायणम् – अमृतकतकव्याख्यायुतम् अयोध्याकाण्डे द्वितीयभागः (तृतीयं संपुटम्) | 11 | 75 |
| 112 | शिवतत्त्वरत्नाकरः केलदिबसवभूपालविरचितः (द्वितीय संपुटम्) | 30 | 00 |
| 113 | अद्वयतारकोपनिषत् – अप्पय्यशिवाचार्यकृतभाष्ययुता | 00 | 35 |
| 114 | सौन्दर्यलहरी – शङ्कराचार्यविरचिता लक्ष्मीधरविरचितया व्याख्यया, कर्णाटकभाषानुवादेन, भास्करभाष्यसहितभावनोपनिषदा, पञ्चस्तव्या च सहिता (परिष्कृतं चतुर्थं मुद्रणम्) | 7 | 00 |
| 115 | मण्डलब्राह्मणोपनिषत् – शङ्कराचार्यविरचितराजयोगभाष्येण, अप्पय्यशिवाचार्यभाष्येण, सव्याख्ययोगतारावल्या च सहिता (परिष्कृतं द्वितीयं मुद्रणम्) | 3 | 75 |
| 116 | न्यायमञ्जरी – जयन्तभट्टविरचिता टिप्पणीसहिता (प्रथमं संपुटम्) | 42 | 00 |
| 117 | पञ्चदशाङ्गयोगप्रकरणम् – अप्पयशिवाचार्यकृतम् | 2 | 00 |
| 111 | दक्षिणामूर्तिस्तोत्रम् – सुरेश्वराचार्यकृतटीकया, कर्णाटकभाषानुवादेन च सहितं (परिष्कृतं द्वितीयं मुद्रणम्) | 10 | 25 |
| 119 | वाल्मीकिरामायणम् – अमृतकतकव्याख्यायुतम् किष्किन्धाकाण्डः (पञ्चमं संपुटम्) | 17 | 00 |

| | | | |
|---|---|---|---|
| 120 | काव्यप्रकाशः—मम्मटभट्टकृतः माणिक्यचन्द्रकृतसङ्केत–टीकया, रविपाणिभट्टाचार्यकृतमधुमतीटीकया च सहितः (प्रथमो भागः) | 10 | 00 |
| 121 | कविकर्णरसायनम्—महाकविषडक्षरीशरचितम् वेङ्कन–सुधीविरचितसाहित्यसुधोदयव्याख्यासमलंकृतम् | 20 | 75 |
| 122 | काव्यप्रकाशः–संङ्केत मधुमतीभ्यां सहितः (द्वितीयो भागः) | 12 | 00 |
| 123 | श्रीकरभाष्यम्—श्रीपतिपंडितविरचितम् (प्रथमो भागः) | 35 | 00 |
| 124 | वर्णनात्मक लिखितग्रन्थसूची (Vol I.) | 40 | 00 |
| 125 | श्रीकरभाष्यम्—श्रीपपतिण्डितविरचितम् (प्रथमो भागः) | 35 | 00 |
| 126 | वर्णनात्मकलिखियग्रन्थसूची (Vol. II) | 40 | 00 |
| 127 | ,, ,, (Vol. III) | 40 | 00 |
| 128 | ,, ,, (Vol. IV-a) | 40 | 00 |
| 129 | ,, ,, (Vol. V) | 40 | 00 |
| 130 | हृदयामृतम्—जगन्नाथपंडितविरचितम् | 10 | 50 |
| 131 | गीतराघवम्—रामकविविरचितम् | 9 | 50 |
| 132 | वर्णनात्मकलिखितग्रन्थसूची (Vol. VI) | 40 | 00 |
| 133 | शिवलिङ्गसूर्दोदयः—मल्लनार्यविरचितः | 10 | 00 |
| 134 | साङ्ख्यदर्शनम्—श्रीधराचार्यविरचित साङ्ख्यदीपिकाख्यया वृत्त्या, सव्याख्यसाङ्ख्यकारिकया च समलंकृतम् | 38 | 00 |
| 135 | वर्णनात्मकलिखितग्रन्थसूचो (Vol. VIII) | 40 | 00 |
| 136 | ब्रह्मसूत्रवृत्तिः—प्रौढदेवरायविरचिता | 25 | 00 |
| 137 | अनुभवसूत्रम् | 8 | 00 |
| 138 | वातुलशुद्धगमः—सव्याख्यः (द्वितीयो भागः) | 23 | 00 |
| 139 | न्यायमञ्जरी—जयन्तभट्टविरचिता (द्वितीयो भागः) | 50 | 00 |

| | | | |
|---|---|---|---|
| 140 | वर्णनात्मकलिखितग्रन्थसूची (Vol. IX) | 40 | 00 |
| 141 | बोधायनगृह्यसूत्रम् (द्वितीयमुद्रणम्) | 32 | 00 |
| 142 | श्रीमद्ब्रह्मसूत्रभाष्यम्—आनन्दतीर्थीयम्, तत्त्वप्रकाशिका-चन्द्रिकाप्रकाशसहितम्, प्रथम संपुटम् (द्वितीयमुद्रणम्) | 25 | 00 |
| 143 | वर्णनात्मकलिखितग्रन्थसूची (Vol. IV-b) | 110 | 00 |
| 143 | " (Vol. X) | 125 | 00 |
| 144 | माधवीया धातुवृत्तिः- प्रथमं संपुटम् (द्वितीयमुद्रणम्) | 21 | 00 |
| 146 | शिवनामकल्पतालवारुः | 13 | 00 |
| 147 | वातुलशुद्धागमः—सव्याख्यः, प्रथमो भागः | — | |
| 148 | शिवतत्त्वरत्नाकरः (तृतीयं संपुटम्) | 22 | 00 |
| 149 | श्रीमद् ब्रह्मसूत्रभाष्यम्—आनन्दतीर्थीयम् तत्त्वप्रकाशिका-चन्द्रिकाप्रकाशसहितम् द्वितीयंसंपुटम् (द्वितीय मुद्रणम्) | 30 | 00 |
| 150 | वर्णनात्मकग्रन्थसूची (Vol. VII-a) | 75 | 00 |
| 151 | योगशतकम्—सव्याख्यम् | 10 | 00 |
| 152 | रघुनाथविजयम्—सव्याख्यम् | 7 | 50 |
| 153 | वर्णनात्मकग्रन्थसूची (Vol. IX) | 120 | 00 |
| 154 | अणुभाष्यम्—छलारिटीकासहितम् | 28 | 00 |
| 155 | वातुलशुद्धागमः (कन्नडांनुवादसहितः) | — | |
| 156 | तर्कताण्डवम्—व्यासयतिकृतम् न्यायदीपाख्यव्याख्यायुतम् प्रथमं संपुटम् (द्वितीयमुद्रणम्) | 33 | 00 |
| 157 | त्रिवेणिका—आशाधरभट्टविरचिता, टिप्पण्यादिभिः समलंकृता | 8 | 00 |
| 158 | कौटिलीयं अर्थशास्त्रम्—चन्द्रिकाख्यटिप्पणीसमलंकृतम् (नूतनं संस्करणम्) | 60 | 00 |

| | | | |
|---|---|---|---|
| 159 | वर्णनात्मकलिखितग्रन्थसूची (Vol. VII Part-b) | 100 | 00 |
| 160 | ,, (Vol. XIII) | 115 | 00 |
| 161 | आपस्तम्बगृह्यसूत्रम् | 23 | 50 |
| 162 | वर्णनात्मकलिखितग्रन्थसूची (Vol. XII-b) | 155 | 00 |
| 163 | ,, (Vol. XV) | 123 | 00 |
| 164 | लक्ष्मीस्वयंवरसमवकारः (नाटकम् (वेङ्कामात्यः) | 9 | 00 |
| 165 | वर्णनात्मकलिखितग्रन्थसूची (Vol. XIV) | 170 | 00 |
| 166 | आयुर्वेदसूत्रम् | — | |
| 167 | वीरराघवव्यायोगः नाटकम् | 6 | 50 |
| 168 | वीरागमोत्तरम् प्रथमो भागः | 30 | 00 |
| 169 | कैवल्यसारः (वीरशैवग्रन्थः) | 16 | 50 |
| 170 | वृत्तरत्नावली छन्दश्शास्त्रम् | 23 | 00 |

—o—

## मुद्रणाय सज्जीक्रियमाणाः ग्रन्थाः

—०—

1 पुराणसारः—माधवाचार्यकृतः

2 वीरभद्रविजयचम्पूः—एकाम्रयज्वविरचितम्

3 एकोत्तरशतस्थलम्—जक्कणाचार्यकृतम्

4 विवेकचिन्तामणिः—शिवयोगिरचितः

5 बसवराजीयम्—पाल्कुरिके सोमनाथकृतम्

6 सारस्वतव्याकरणटीका—चेन्नवीरकविकृता

7 वीरमाहेश्वराचारसंग्रहः—नीलकण्ठनागनाथाचार्यकृतः कर्णाटक-व्याख्यायुतः

8 तत्त्वोद्योतः—आनन्दतीर्थविरचितः पद्मनाभतीर्थीयव्याख्यायुतः

9 वाल्मीकिरामायणम्—अमृतकतकव्याख्यायुतम् (सुन्दरकाण्डः)

10 ,, ,, (युद्धकाण्डः)

11 ,, ,, (उत्तरकाण्डः)

11 अलङ्काररराघवम्—यज्ञेश्वरदीक्षितविरचितम्

12 नीतिशतकम्—श्रीनिवासविरचितम्

13 न्यायसूत्रनिबन्धः—गम्भीरवंशजविरचितम्

14 कुशलवचम्पूः—वेङ्कामात्यरचिता

15 आर्योल्लासः—वेङ्कटाचलकृतः

15 कूपशास्त्रम्—जलमूलविज्ञानम्

17 विद्यामाधवीयम्—प्रथमं संपुटम् (द्वितीय मुद्रणम् )

18 कामविलासभाणः—वेङ्कामात्यकृतः

—०—

